# अभ्यासः

१. **आद्गुण :**

अकारात् आकारात् च 'इ उ ऋ ऌ' वर्णेषु परतः गुणः भवति

(क) अकाराद् आकाराद् वा इ ई वर्णे परे उभयोः स्थाने 'ए' भवति ।

यथा- अ + इ = ए = देव + इन्द्रः = देवेन्द्रः ।

अ + ई = ए = गण + ईशः = गणेशः ।

आ + इ = ए = तथा + इति = तथेति ।

आ + ई = ए = उमा + ईशः = उमेशः ।

(ख) अकाराद् आकाराद् वा उ ऊवर्णयोःपरयोः उभयोः स्थाने 'ओ' भवति ।

यथा - अ + उ = ओ - चन्द्र + उदय : चन्द्रोदयः ।

अ + ऊ = ओ - जल + ऊर्मिः = जलोर्मिः ।

आ + उ = ओ - यथा + उक्तम् = यथोक्तम् ।

आ + ऊ = ओ - महा + ऊर्मिः = महोर्मिः ।

(ग) अकाराद् आकाराद् वा ऋ-ॠ -वर्णयोः परयोः पूर्वपरयोः स्थाने 'उरण् रपरः इति सूत्रसहकारेण 'अर्' भवति ।

यथा - अ + ऋ = अर्, - सुर + ऋषिः = सुरर्षिः

आ + ऋ = अर् - वर्षा + ऋतुः = वर्षर्तुः

२. **वृद्धिरेचि**

अकाराद् आकाराद् वा ए ओ ऐ औ वर्णेषु परेषु उभयो : स्थाने 'वृद्धिः' भवति ।

(क) अकाराद् आकाराद् वा ए - ऐवर्णयोः परयोः पूर्वपरयोः स्थाने 'ऐ' भवति ।

यथा – अ + ए = ऐ = तव + एव = तवैव ।

आ + ए = ऐ - तथा + एव = तथैव ।

अ + ऐ = ऐ - मम + ऐश्वर्यम् = ममैश्वर्यम् ।

आ + ऐ = ऐ - सदा + ऐक्यम् + सदैक्यम् ।

(ख) अकाराद् आकाराद् वा **ओ**, **औ** वर्णयोः परयोः पूर्वपरयोः स्थाने 'औ' भवति ।

यथा - आ + ओ = औ - तस्य + ओषधिः = तस्यौषधिः ।

आ + ओ = ओ - महा + ओषधिः = महौषधिः ।

अ + औ = औ चित्त + औदार्यम् = चित्तौदार्यम् ।

आ + औ = औ महा + औदार्यम् = महौदार्यम् ।

३. **प्रयोगसाधनप्रकार :**

(क) **उपेन्द्रः** - 'उप + इन्द्रः' इति स्थिते 'आद् गुणः' इति सूत्रेण 'अकार-इकारयोः स्थाने गुणे एकारे वर्णसम्मेलने 'उपेन्द्रः' इति रूपं सिद्धम् ।

(ख) **कृष्णर्द्धिः** - 'कृष्ण + ऋद्धिः' इति स्थिते 'उरण् रपरः' इति सूत्रसहकारेण 'आद् गुणः' इति सूत्रेण गुणे 'कृष्ण अर् द्धिः' इति जाते वर्णसम्मेलने 'कृष्णर्द्धिः' इति रूपं सिद्धम् ।

एवमेव एतेषामपि सिद्धिप्रक्रिया भवति - सुरेशः, भाग्योदयः, राजेन्द्रः, राजेशः, सूर्योदयः, विद्योन्नतिः, गङ्गोदकम्, सप्तर्षयः, ग्रीष्मर्तुः इत्यादि ।

(अ) **कृष्णैकत्वम्** - 'कृष्ण + एकत्वम्' इति स्थिते 'वृद्धिरेचि' इति सूत्रेण अकारस्य एकारस्य च स्थाने वृद्धौ ऐकारे 'कृष्ण् ऐ कत्वम्' इति जाते वर्णसम्मेलने 'कृष्णैकत्वम्' इति रूपं सिद्धम् ।

(आ) **देवैश्वर्यम्** - 'देव + ऐश्वर्यम्' इति स्थिते 'वृद्धिरेचि' इतिसूत्रेण अकारस्य ऐकारस्य च स्थाने वृद्धौ ऐकारे' देव् ऐ श्वर्यम्' इति जाते वर्णसम्मेलने 'देवैश्वर्यम्' इति रूपं सिद्धम् ।

(इ) गङ्गौघः 'गङ्गा + ओघः' इति स्थिते 'वृद्धिरेचि' इति सूत्रेण आकारस्य ओकारस्य च स्थाने वृद्धौ औकारे 'गङ्ग् औ घः' इति जाते वर्णसम्मेलने गङ्गौघः इति रूपं सिद्धम् । एवमेव - अद्यैव, तवैव, सदैव, मतैक्यम्, मैवम्, कृष्णौत्कण्ठ्यम्, महौषधिः, महौदार्यम्, पञ्चैव, इत्यादीनां सिद्धिप्रक्रियापि भवति ।

## अभ्यासार्थ प्रश्नाः

१. **अधोलिखितेषु शब्देषु सन्धिविच्छेदं कुरुत–**
गणेन्द्रः, महोदयः, पुरुषोत्तमः, चन्द्रोदयः, गजेन्द्रः, महेशः, तवैव, वसुधैव, देवर्षिः, महोत्सवः, जलौघः, मतैक्यम् ।

२. **अधोलिखितेषु शब्देषु सन्धिं सन्धिविधायकं सूत्रं च लिखत –**
(यथा सुर + इन्द्रः - सुरेन्द्रः (आद्गुणः) ।
मम + इच्छा, सुर + ऋषिः, तव + औदार्यम्, तस्य + एव, त्वया + इदम्, गण + ईशः, कदा + एव, देव + ऐश्वर्यम् अत्र + एव ।

३. **अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत –**
(क) गुणपदेन केषां वर्णानां ग्रहणं भवति । (गुणपदेन अ-ए-ओ वर्णानां ग्रहणं भवति ।)
(ख) 'आद् गुणः' इति सूत्रं किं करोति ?
(ग) वृद्धिपदेन केषां वर्णानां ग्रहणं भवति ।
(घ) 'वृद्धिरेचि' इति सूत्रं किं करोति ?
(ङ) एच् प्रत्याहारे के के वर्णाः आयान्ति ?

४. **अधोनिर्दिष्टानां शब्दानां सिद्धिप्रक्रियां दर्शयत –**
महेशः, सुरेन्द्रः, जलौघः, तवैव, सूर्योदयः, मतैक्यम् ।

५. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थम् लिखत–**
अदेङ् गुणः, वृद्धिरादैच्, उरण् रपरः ।

६. **अधोलिखितेषु शब्देषु गुण-वृद्धि-यण्सन्धियुतानि पदानि पृथक् पृथक् स्थापयत -**
रमेशः, अद्यैव, वर्णैक्यम्, मानवोचितम्, महोदधिः, अन्वयः, गच्छाम्यहम्, महेश्वरः, उमेशः, स्वागतम्, वध्वागमनम्, वनौषधिः, ममौचित्यम्।

७. **अधोलिखितेषु शुद्धवाक्येषु शुद्धतासूचकं (√) चिह्नम्, अशुद्धेषु च अशुद्धतासूचकं (x) चिह्नम् दर्शयत।**

(क) 'आद्गुणः' इति सूत्रं गुणविधायकम्। ( )

(ख) 'वृद्धिरादैच्' इति सूत्रेण वृद्धिसंज्ञा न भवति। ( )

(ग) अण्प्रत्याहारे अ-इ-उ वर्णाः आयान्ति। ( )

(घ) आ-ऐ-औ वर्णानां वृद्धिसंज्ञा भवति। ( )

(ङ) अभ्युदयः इत्यत्र गुणो भवति। ( )

(च) 'वृद्धिरेचि' इति सूत्रं वृद्धिसंज्ञकम् अस्ति। ( )

८. **रिक्तस्थानं पूरयत -**

(क) 'अदेङ् गुणः' इति सूत्रेण ............... भवति। (गुणः, गुणसंज्ञा)

(ख) अवर्णाद् अचि परे .................. स्थाने गुणः भवति। (पूर्वपरयोः, पूर्वस्य)

(ग) अवर्णाद् ................. परे वृद्धिर्भवति। (अचि, एचि)

(घ) ऋकारस्य स्थाने .................. रपरः सन् प्रवर्तते। (अच्, अण्)

(ङ) ..................... वृद्धिसंज्ञां करोति। (वृद्धिरेचि, वृद्धिरादैच्)

(च) 'गण+ईशः' इति स्थिते ..................... इति सूत्रेण ..................... वर्णसम्मेलने ............. रूपं सिद्धम्।

९. **परस्परं समूहे मेलयत -**

| अ समूह : | आ समूह : |
|---|---|
| (क) आद् गुणः | (क) वृद्धिः |
| (ख) इको यणचि | (ख) गुणसंज्ञा |
| (ग) वृद्धिरादैच् | (ग) यण् |
| (घ) वृद्धिरेचि | (घ) वृद्धिसंज्ञा |
| (ङ) अदेङ्गुणः | (ङ) गुणः |

## विशेष अभ्यास

१. पाणिनि व्याकरणमा गुण भन्नाले अ, ए, ओ र वृद्धि भन्नाले आ-ऐ-औ भन्ने बुझिन्छ ।

| सन्धि | सूत्र | नियम | सिद्धान्त | उदाहरण |
|---|---|---|---|---|
| गुण | आद् गुणः | अ, आ देखि इ, उ ऋ ऌ पर भएमा ए , ओ, अर् अल् हुन्छन् । | अ, आ + इ ई = ए<br>अ, आ + उ, ऊ = ओ<br>अ, आ + ऋ, ॠ = अर्<br>अ, आ + ऌ = अल् | रमा + ईशः = रमेशः<br>सूर्य + उदयः = सूर्योदयः<br>महा + ऋषिः = महर्षिः<br>तव + ऌकारः = तवल्कारः |
| वृद्धि | वृद्धि-रेचि | अ, आ देखि ए ऐ ओ औ पर भएमा ऐ औ हुन्छन् । | अ, आ + ए, ऐ = ऐ<br>अ, आ + औ, औ = औ | तथा + एव = तथैव<br>महा + औषधम् = महौषधम् |

## शब्दार्थ

उपेन्द्रः = इन्द्रका भाइका रूपमा प्रसिद्ध 'वामन' (विष्णु)

सुरेशः = देउताका मालिक, इन्द्र

महेशः = शिव

सूर्योदयः = घाम झुल्काइ

महर्षिः = ठूला ऋषि

देवर्षिः = नारद

कृष्णैकत्वम् = कृष्णको एकता

तवैश्वर्यम् = तिम्रो श्रीसम्पत्ति

देवैश्वर्यम् = देउताको श्रीसम्पत्ति

सदैव = सधैँ

परमौषधिः = श्रेष्ठ औषधी

गङ्गौघः = गङ्गाको प्रवाह

महौषधिः = ठूलो औषधी

षष्ठ: पाठ:

# अच्सन्धि:

(दीर्घविधायकं सूत्रम्)

५।१ ७।१ १।१८
सूत्र-२५ **अक: सवर्णे दीर्घ: ६ । १ । १०१**

**अक: सवर्णेऽचिपरे पूर्वपरयोर्दीर्घ एकादेश: स्यात् ।**

दैत्यारि: । श्रीश: । विष्णूदय: । होतॄकार: ।

(अ-इ-उ-ऋ-लृवर्णेभ्य: समानेषु स्वरवर्णेषु परत: पूर्वपरयो: स्थाने एक: दीर्घ: स्वर: भवति । यथा - 'दैत्य + अरि:' इत्यत्र यकारोत्तरवर्तिन: अकारस्य 'अरि:' इति अकारेण सवर्णदीर्घे 'दैत्यारि:' इति भवति । एवमेव- हिम + आलय: = हिमालय:, महा + आशय: = महाशय:, गिरि + इन्द्र:= गिरीन्द्र:, श्री + ईश: = श्रीश:, विष्णु + उदय: = विष्णूदय:, होतृ + ऋकार: = होतॄकार: इत्यादय: सिद्ध्यन्ति ।)

(पूर्वरूपविधायकं सूत्रम्)

५।१ ५।१ ७।१
सूत्र-२६ **एङ: पदान्तादति ६ । १ । १०९**

**पदान्तादेङोऽति परे पूर्वरूपमेकादेश: स्यात् । हरेऽव । विष्णोऽव ।**

(पदान्तादभ्याम् ए-ओ इतिवर्णाभ्याम् ह्रस्वाकारे परे पूर्वपरयो: स्थाने पूर्वरूपम् एकादेश: भवति । पूर्वरूपसूचनाय च खण्डाकार: (ऽ) आयाति । यथा- 'हरे+अव' इत्यत्र पदान्त: एङ् रकारोत्तरवर्ती एकार:, तत: पर: ह्रस्व: अकार: अव इत्यस्य अकार:, तथाच एकारस्य अकारस्य च स्थाने पूर्वरूपे 'हरेऽव' इति भवति एवमेव-विष्णो + अव = विष्णोऽव, वने + अत्र = वनेऽत्र, सर्वे + अपि = सर्वेऽपि, के + अपि = केऽपि, साधो + अत्र = साधोऽत्र, इत्यादि ।)

(टिसंज्ञा सूत्रम्)

६।१ १।१ १।१

सूत्र-२७ अचोऽन्त्यादि टि १ । १ । ६४

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । (अचां मध्ये योऽन्त्यः अच् स आदिर्यस्य समुदायस्य तस्य समुदायस्य 'टि' संज्ञा भवति ।)

(प्लुतविधायकं सूत्रम्)

५।१ ७।१ ०

सूत्र-२८ दूराद्धूते च ८ । २ । ८४

दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा ।

(दूरतः सम्बोधने (आह्वाने) प्रयुक्तस्य वाक्यस्य टेः (टिसंज्ञकस्य) प्लुतः विकल्पेन भवति । यथा - आगच्छ कृष्ण ! अत्र गौश्चरति इत्यत्र कृष्णपदे विद्यमानस्य णकारोत्तरवर्तिनः अकारस्य 'अचोऽन्त्यादि टि' इति सूत्रेण टि संज्ञायाम्, तस्य 'दूराद्धूते च' इति सूत्रेण प्लुते 'आगच्छ कृष्ण ३ अत्र गौश्चरति' इति भवति)

(प्रकृतिभावविधायकं सूत्रम्)

१।३ ७।१ १।१

सूत्र-२९ प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५

एतेऽचि प्रकृत्याः स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ।

(प्लुतस्य प्रगृह्यसंज्ञकस्य प्रकृतिभावो भवति अचि परे । यथा - 'आगच्छ कृष्ण ३ अत्र गौश्चरति' इति वाक्ये सम्बोधनस्य कृष्ण इत्यस्य 'टेः' प्लुते तस्माद् अचि परे अनेन सूत्रेण प्रकृतिभावो भवति । प्रकृतिभावे च रूपम् यथापूर्वम् तिष्ठति ।)

(प्रगृह्यसंज्ञासूत्रम्)

सूत्र-३० ईदूदेद् द्विवचनं प्रगृह्यम् १ । १ । ११

**ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् ।**

(ईकारान्तद्विवचनस्य, ऊकारान्तद्विवचनस्य, एकारान्तद्विवचनस्य च प्रगृह्यसंज्ञा भवति । प्रगृह्यसंज्ञाया: फलम् 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभाव: । यथा - 'हरी + एतौ' इत्यत्र 'हरी' इत्यस्य ईकारान्तद्विवचनस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभावे 'हरी एतौ' इति भवति । एवमेव विष्णू + इमौ = विष्णू इमौ गङ्गे + अमू = गङ्गे अमू, कवी + आगच्छत: + कवी आगच्छत:, बालिके + अधीयाते = बालिके अधीयाते इत्यादि ।)

## अभ्यास:

१. **अक: सवर्णे दीर्घ:**

अ - इ - उ - ऋवर्णेभ्य: समानेषु स्वरवर्णेषु परत: पूर्वपरयो: स्थाने एक: दीर्घ: स्वरो भवति ।

| | | | |
|---|---|---|---|
| यथा - | (क) | अ + अ = आ | धन + अर्थी = धनार्थी । |
| | | अ + आ = आ | पुस्तक + आलय: = पुस्तकालय: । |
| | | आ + अ = आ | विद्या + अर्थी = विद्यार्थी । |
| | | आ + आ = आ | महा + आशय: = महाशय: । |
| | (ख) | इ + इ = ई | गिरि + इन्द्र: = गिरीन्द्र: । |
| | | इ + ई = ई | गिरि + ईश: = गिरीश: । |
| | | ई + इ = ई | योगी + इन्द्र: = योगीन्द्र: । |
| | | ई + ई = ई | मही + ईश: महीश: । |

(ग) उ + उ = ऊ  विधु + उदय: = विधूदय: ।
उ + ऊ = ऊ  लघु + ऊर्मि: = लघूर्मि: ।
ऊ + उ = ऊ  वधू + उत्सव: = वधूत्सव: ।
ऊ + ऊ = ऊ  चमू + ऊर्जितम् = चमूर्जितम् ।
(घ) ऋ + ऋ = ॠ  पितृ + ऋणम् = पितॄणम्
ऋ + ऋ = ॠ  होतृ + ऋकार: = होतॄकार:
ॠ वर्णस्य:  प्रसिद्धानि उदाहरणानि न सन्ति ।

२. **एङ: पदान्तादति**

कस्यापि पदस्य (सुबन्तस्य तिङन्तस्य वा) अन्ते यदि 'एकार:, ओकार: वा आयाति अग्रे च ह्रस्व: अकारो भवति तदा पूर्वरूपम् (एकारस्य ओकारस्य वा रूपम्) भवति । यथा - ए + अ = एऽ  वृक्षे + अस्मिन् = वृक्षेऽस्मिन् .

ओ + आ = ओऽ, गुरो + अव = गुरोऽव ।

३. **प्लुतप्रगृह्या अचि नित्यम्**

प्लुतस्य प्रगृह्यसंज्ञकस्य च स्थाने सन्धि: न भवति तस्य रूपं यथापूर्वम् तिष्ठति । 'एहि कृष्ण ३ अत्र क्रीडाम:' इत्यादिवाक्ये प्रथमत: प्लुते कृते सति अनन्तरं 'प्लुतप्रगृह्या:' इत्यस्य प्रवृत्तिर्भवति । एवम् - 'मुनी + इमौ' इत्यवस्थायाम् 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सूत्रेण प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या' इत्यस्य प्रवृत्तिर्भवति । उभयत्रापि 'अक: सवर्णे दीर्घ:' इति सूत्रेण दीर्घे प्राप्ते तं प्रबाध्य प्रकृतिभावो भवति ।

४. **प्रयोगसिद्धि प्रक्रिया** -

(क) **दैत्यारि:**- 'दैत्य + अरि:' इति स्थिते 'अक: सवर्णे दीर्घ:' इति सूत्रेण सवर्णदीर्घे 'दैत्यारि:' इति रूपं सिद्धम् ।

(ख) **होतॄकार:**- होतृ + ऋकार: इत्यवस्थायाम् 'अक: सवर्णे दीर्घ:' इति सूत्रेण सवर्णदीर्घे होतॄकार: इति रूपं सिद्धम् ।

एवमेव - श्रीशः, विष्णूदयः, देवालयः, शशाङ्कः, कथामृतम्, सिंहासनम्, सदानन्दः, विद्यालयः, प्रतीक्षा, परीक्षा, इत्यादीनां सिद्धिर्भवति ।

(अ) **हरेऽव** - 'हरे + अव' इति स्थिते 'एङः पदान्तादति' इति सूत्रेण पूर्वरूपे 'हरेऽव' इतिरूपं सिद्धम् ।

(आ) **विष्णोऽव** - "विष्णो = अव' इति स्थिते 'एङः पदान्तादति' इति सूत्रेण पूर्वरूपे 'विष्णोऽव' इति रूपं निष्पन्नम् । एवमेव - वनेऽत्र, सर्वेऽपि, कोऽपि, रामेऽपि, साधोऽत्र, इत्यादीनां सिद्धिर्भवति ।

(i) **हरी एतौ** - हरि + एतौ इति स्थिते 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सूत्रेण प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभावे 'हरी एतौ' इति रूपं सिद्धम् ।

(ii) **विष्णू इमौ** - विष्णू + इमौ इति स्थिते 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सूत्रेण प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभावे 'विष्णू इमौ' इति रूपं सिद्धम् ।

एवमेव - मुनी अत्र, कवी आगच्छतः, गङ्गे अमू, बालिके अधीयाते, ऋतू अतीतौ, नेत्रे आमृशति इत्यादयः सिद्ध्यन्ति ।

## अभ्यासार्थं प्रश्नाः

१. **अधोलिखितेषु शब्देषु सन्धिविच्छेदं कुरुत -**

शुभागमनम्, विद्याभ्यासः, क्षितीशः, कपीन्द्रः, देवालयः, सूक्तिः, भ्रातृणम्, रामोऽसौ, श्लोकोऽयम्, तेऽपि, छात्रोऽवदत्, आगच्छ राम३ इह लक्ष्मणः, आगच्छ हरे३ अत्र क्रीडेम नेत्रे आमृशति ।

२. **अधोनिर्दिष्टेषु शब्देषु सन्धिं विधाय सूत्रमपि लिखत**

सुख + अर्थी, कृत + अर्थः, महा + अष्टमी, भानु + उदयः, सती + ईशः, मुखे + अस्मिन्, पत्रे + अस्मिन्, पुस्तके + अत्र, गङ्गे + अमू, मुनी + एतौ ।

३. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थ लिखत -**

अकः सवर्णे दीर्घः, एङः पदान्तादति, प्लुतप्रगृह्या अचि नित्यम् ।

४. **अधोनिर्दिष्टानां प्रश्नानाम् उत्तराणि लिखत -**

(क) अक्प्रत्याहारे के के वर्णाः सन्ति ? (अक्प्रत्याहारे **अ इ उ ऋ लृ** वर्णाः सन्ति)

(ख) दीर्घसंज्ञाविधायकं सूत्रं किम् ?

(ग) ई + ई वर्णयोः सवर्णदीर्घे कीदृशं रूपं भवति ?

(घ) 'एङः पदान्तादति' इति सूत्रं किं करोति ?

(ङ) प्रकृतिभावविधायकं सूत्रं किम् ?

(च) 'अचोऽन्त्यादि टि' इति सूत्रं किं करोति ?

५. **अधोलिखितानां शब्दानां सिद्धिप्रक्रियां दर्शयत -**

श्रीशः विष्णूदयः, पितृणम्, वनेऽत्र, रामोऽयम्।

६. **अधोनिर्दिष्टेषु शब्देषु दीर्घ - पूर्वरूप - गुणसन्धियुतान् शब्दान् पृथक् कुरुत -**

सुरालयः, उमेशः विधूदयः, ग्रन्थेऽस्मिन्, विद्यालयः, विद्यार्थी, छात्रावासः, पुस्तकेऽत्र, भाग्योदयः, सुरेन्द्रः ।

७. **अधोलिखितेषु शुद्धेषु वाक्येषु शुद्धतासूचकं (√) चिह्नम् अशुद्धेषु च अशुद्धतासूचकं (x) चिह्नम् दर्शयत -**

(क) इ + इ वर्णयोः, ई + इ वर्णयोः सन्धौ 'ई' भवति । ( )

(ख) भानूदयः, सूर्योदयः, उभयत्रापि दीर्घो भवति । ( )

(ग) 'एङः पदान्तादति' इति सूत्रं गुणविधायकम् । ( )

(घ) ईकारान्तद्विवचनस्य प्रगृह्यसंज्ञा भवति । ( )

८. **रिक्तस्थानं पूरयत-**

(क) अकः सवर्णेऽचि परे ............ भवति । (गुणः, दीर्घः)

(ख) अच्प्रत्याहारे ................ ग्रहणं भवति । (स्वरवर्णानाम्, व्यञ्जनानाम्)

(ग) पदान्ताद् एङः अति परे ............ भवति । (पूर्वरूपम्, वृद्धिः)

(घ) दूरात् सम्बोधने ................. टेः प्लुतो भवति । (वाक्यस्य, पदस्य)

(ङ) विद्यार्थी, सङ्ग्रहालयः, इत्यत्र ................ भवति । (दीर्घः, गुणः)

(च) हरी + एतौ इत्यवस्थायाम् .................. इति सूत्रेण ................ 'हरी एतौ' इति सिद्धयति ।

## विशेष अभ्यास

| सन्धि | सूत्र | नियम | सिद्धान्त | उदाहरण |
|---|---|---|---|---|
| दीर्घ | अकः सवर्णे दीर्घः | ह्रस्व या दीर्घ अ, इ, उ, ऋ देखि अ, इ, उ ऋ मिलेर दीर्घ हुन्छ । | अ, आ + अ, आ = आ<br>इ, ई + इ, ई = ई<br>उ, ऊ + उ, ऊ = ए<br>ऋ, ॠ + ऋ ॠ = ॠ | पुस्तक+आलयः = पुस्तकालयः<br>रवि+इन्द्रः = रवीन्द्रः<br>भानु+उदयः= भानूदयः<br>मातृ+ऋणम् = मातॄणम् |
| पूर्वरूप | एङः पदान्तादति | ए ओ देखि ह्रस्व अ पर भएमा पूर्वरूप हुन्छ । | ए + अ = एऽ<br>ओ + अ = ओऽ | सर्वे+अपि = सर्वेऽपि<br>साधो+अत्र = साधोऽत्र |
| प्रकृति भाव | प्लुत-प्रगृह्या अचि नित्यम् | प्लुत स्वरदेखि अच् पर भएमा जस्ताको तस्तै रहन्छ । प्रगृह्य संज्ञकदेखि अच् पर भएमा प्रकृतिभाव हुन्छ । | अ३ + अ = अ३ अ<br>द्विवचन ईकारान्त<br>ऊकारान्त द्विवचन<br>एकारान्त द्विवचन | आगच्छ कृष्ण ३ + अत्र गौश्चरति, जस्ताको तस्तै<br>हरी+ एतौ = हरी एतौ<br>विष्णू+इमौ = विष्णू इमौ<br>गङ्गे+अमू = गङ्गे अमू |

## शब्दार्थ

| | | |
|---|---|---|
| दैत्यारिः | = | दैत्यका शत्रु (विष्णु) । |
| हिमालयः | = | टाकुराहरू सधैं हिउँले ढाकिराख्ने पहाड, हिमाल । |
| महाशयः | = | ठूलो विचार भएको व्यक्ति । |
| गिरीन्द्रः | = | पर्वतको राजा । |
| श्रीशः | = | श्री (लक्ष्मी) का मालिक (नारायण) । |
| विष्णूदयः | = | विष्णुको उदय । |
| हरेऽव | = | हे हरि ! रक्षा गर । |
| विष्णोऽव | = | हे विष्णु ! रक्षा गर । |
| वनेऽत्र | = | यस वनमा । |
| साधोऽत्र | = | हे साधु यहाँ (आऊ) । |
| हरी एतौ | = | यी दुई हरि । |
| विष्णू इमौ | = | यी दुई विष्णु । |
| गङ्गे अमू | = | यी दुई गङ्गा |
| कवी आगच्छतः | = | दुइ कविहरू आउँछन् । |
| बालिके अधीयाते | = | दुइ बालिकाहरू पढ्छन् । |

सप्तमः पाठः

# हल्सन्धिः

**(श्चुत्वविधायकं सूत्रम्)**

सूत्र-३१ **स्तोः[६।१] श्चुना[३।१] श्चुः[१।१]** ८ । ४ । ४०

**सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः ।**

रामश्शेते रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जयः ।

(स, त, थ, द, ध, न वर्णानां श च छ ज झ ञ वर्णैः सह योगे शकारः, च, छ, ज, झ, ञ वर्णा भवन्ति । यथा - हरिस् + शेते इत्यवस्थायां सकारस्य शकारेण योगे सकारस्य शकारादेशे हरिश्शेते इति सिद्ध्यति । एवमेव - रामस् + शेते = रामश्शेते, रामस् + चिनोति = रामश्चिनोति, सत् + चित् = सच्चित्, उत् + चारणम् = उच्चारणम्, शार्ङ्गिन् + जयः = शार्ङ्गिञ्जयः, इत्यादयः प्रयोगाः सिद्ध्यन्ति ।)

**(ष्टुत्वविधायकं सूत्रम्)**

सूत्र-३२ **ष्टुना[३।१] ष्टुः[१।१]** ८ । ४ । ४१

**स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । पेष्टा । तट्टीका । चक्रिण्ढौकसे ।**

(सकारस्य त, थ, द, ध, न वर्णानां षकारेण ट ठ ड ढ ण वर्णैः सह योगे षकारटवर्गौ भवतः । यथा - 'रामस् + षष्ठः' इत्यत्र सकारस्य षकारेण योगे पूर्वसकारस्य स्थाने ष्टुत्वेन षकारे 'रामष्षष्ठः' इति सिद्ध्यति । एवमेव - रामस् + टीकते = रामष्टीकते, पेष् + ता = पेष्टा, उद् + डयनम् = उड्डयनम्, तत् + टीका = तट्टीका इत्यादयः सिद्ध्यन्ति ।)

**(जश्त्वविधायकं सूत्रम्)**

६।३ १।१ ७।१

**सूत्र-३३ झलां जशोऽन्ते ८। २। ३९**

**पदान्ते झलां जशः स्युः ।** वागीशः ।

(पदस्यान्ते विद्यमानानां झल्प्रत्याहारस्थवर्णानां स्थाने जश्प्रत्याहारस्थाः वर्णाः भवन्ति । यथा - वाक् + ईशः इत्यत्र पदान्तस्य ककारस्य स्थाने जश्त्वेन गकारे 'वागीशः' इति रूपं सिद्ध्यति । एवमेव - जगत् + ईशः जगदीशः, अच् + अन्तः = अजन्तः, दिक् + ईशः = दिगीशः, सुप् + अन्तः = सुबन्तः, इत्यादयः सिद्ध्यन्ति ।)

**(चर्त्वविधायकं सूत्रम्)**

७।१ ०

**सूत्र-३४ खरि च ८। ४। ५५**

**खरि झलां चरः स्यु : ।**

(खर्प्रत्याहारस्थेषु वर्णेषु परतः झल्प्रत्याहारस्थानां वर्णानां स्थाने चर्प्रत्याहारस्थाः वर्णाः आयान्ति । यथा - 'तद् + कार्यम्' इत्यत्र दकारस्य स्थाने अनेन चर्त्वेन तकारः भवति, ककाररूपे खर्प्रत्याहारस्थवर्णे परे, तथा च 'तत् कार्यम्' इति सिद्ध्यति । एवमेव' सद् + कर्म = सत् कर्म, तद् + कृतम् = तत् कृतम्, वृक्षाद् + पतति = वृक्षात् पतति, वाग् + फलति = वाक् फलति, इत्यादयः सिद्ध्यन्ति ।)

## अभ्यासः

**१. स्तोःश्चुना श्चुः**

**स, त, थ, द, ध, न,** वर्णानां **श, च, छ, ज, झ, ञ** वर्णैः सह योगे **स त थ द ध न** वर्णानां स्थाने क्रमशः **श, च, छ, ज, झ, ञ** वर्णाःभवन्ति ।

यथा - सत् + चरित्रम् = सच्चरित्रम्, विपद् + जालम् = विपज्जालम्, सूर्यस्+ छन्नः = सूर्यश्छन्नः, याच् + ना = याच्ञा, इत्यादयः ।

२. **ष्टुना ष्टुः**

**स, त, थ, द, ध, न** वर्णानां **ष, ट, ठ, ड, ढ, ण** वर्णैः सहयोगे **स, त, थ, द, ध, न** वर्णानां स्थाने क्रमशः **ष, ट, ठ, ड, ढ, ण,** वर्णाः भवन्ति)

यथा - प्रष् + ता = प्रष्टा, मत् + टीका = मट्टीका, अधिष् + थाता = अधिष्ठाता, उद् + डीयते = उड्डीयते, इत्यादि ।

३. **झलां जशोऽन्ते**

झल् प्रत्याहारस्थानां वर्णानां = **झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह** वर्णानां स्थाने जश्त्वेन **ज ब ग ड द** वर्णाः भवन्ति । पदान्ते इत्यर्थः निष्पन्नः तथापि- **झ, भ, घ, ढ, ध, ख, फ, छ, ठ, थ, च, ट, त, क, प** वर्णानां स्थाने तत्तद्वर्गस्थाः तृतीयाःवर्णा आयान्ति । षकारस्य स्थाने 'ड' भवति, अन्येषाम् उदाहरणानि प्रायः न मिलन्ति । यथा - चित् + रूपम् = चिद्रूपम्, अच् + अन्तः = अजन्तः, सुप् + अन्तः = सुबन्तः, रत्नमुद् + धावति = रत्नमुड् धावति, इत्यादयः

४. **खरि च**

वर्गाणां प्रथम - द्वितीय - चतुर्थ - वर्णेभ्यः परं यदि वर्गाणां प्रथमद्वितीया वर्णाः श, ष, स वर्णाः आयान्ति तदा प्रथमवर्णानां स्थाने तस्यैव वर्णस्य प्रथमः वर्णः भवति । यथा - लभ् + स्यते = लप्स्यते (अत्र चतुर्थवर्णस्य स्थाने तस्यैव वर्गस्य प्रथमाक्षरम् आयाति ।)

## प्रयोगसिद्धिप्रक्रिया

**रामश्शेते** - 'रामस् + शेते' इत्यवस्थायां 'स्तोः श्चुना श्चुः' इति सूत्रेण श्चुत्वेन सकारस्य स्थाने शकारे 'रामश्शेते' इति रूपं सिद्धम् ।

**रामष्टीकते** - रामस् + टीकते 'इत्यत्र' 'ष्टुना ष्टुः' इति सूत्रेण ष्टुत्वेन सकारस्य स्थाने षकारे 'रामष्टीकते' इति रूपं सिद्धम् ।

**जगदीशः** - 'जगत् + ईशः' इति स्थिते 'झलां जशोऽन्ते' इति सूत्रेण जश्त्वेन तकारस्य स्थाने दकारे वर्णसम्मेलने जगदीशः 'इति रूपं सिद्धम् ।

**सत्कार्यम्** - 'सद् + कार्यम्+ इति स्थिते 'खरि च' यति सूत्रेण चर्त्वे दकारस्य स्थाने तकारे 'सत्कार्यम्' इति भवति ।

## अभ्यासार्थ प्रश्नाः

१. **अधोलिखितेषु शब्देषु सन्धिविच्छेदं कुरुत -**

सज्जनः, मनश्शीतलम्, निश्चितम्, सच्चरित्रम्, शरच्चन्द्रः, दिग्गीशः, चिदानन्दः, यदिदम्, अस्मद्देशः, एतट्टङ्कितम्, हरिष्टीकते, दुष्टः, उत्साहः ।

२. **अधोनिर्दिष्टेषु शब्देषु सन्धिं कुरुत -**

जगत् + जननी, महत् + छाया, तपस् + चर्या, दुस् + चरित्रम्, एतद् + जलम्, शिवस् + टीकते, मुनिस् + षष्ठः, इष् + तम्, षट् + दर्शनम्, महत् + अन्तरम्, सद्, + कर्म ।

३. **अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत -**

(क) 'श्चु' पदेन केषां वर्णानां ग्रहणं भवति (श्चु, पदेन **श**, **च**, **छ**, **ज**, **झ**, **ञ** वर्णानां ग्रहणं भवति)

(ख) 'ष्टुना ष्टुः' इति सूत्रं किं करोति ?

(ग) पदान्ते जश्त्वविधायकं सूत्रं किम् ?

(घ) 'झल्' प्रत्याहारे के के वर्णाः आयान्ति ?

(ङ) 'चर्' पदेन केषां वर्णानां ग्रहणं भवति ?

(च) ष्टुत्वेन केषां ग्रहणं भवति ?

४. अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थ लिखत–

स्तो: श्चुना श्चु:, झलां जशोऽन्ते, खरि च ।

५. अधोलिखितानां शब्दानां सिद्धिप्रक्रियां दर्शयत–

सज्जन:, उच्चारणम्, रामष्षष्ठ:, रामष्टीकते, जगदीश: ।

६. अधोनिर्दिष्टेषु शब्देषु श्चुत्व-ष्टुत्व-जश्त्वसन्धियुतान् शब्दान् पृथक् कुरुत –

सच्चरित्रम्, सज्जन: दिगीश:, मट्टीका, दुष्ट:, निश्चितम्, उच्चारणम्, सत्कार्यम्, दिगन्त: दिग्गज:, उत्साह:, उत्तीर्ण:, दिक्पाल:, उड्डयनम् ।

७. अधोलिखितेषु शुद्धवाक्येषु (√) चिह्नम्, अशुद्धेषु च (x) चिह्नं दर्शयत ।

(क) 'स्तो:' पदेन **स, त, थ, द, ध, न** वर्णानां ग्रहणं भवति । ( )

(ख) 'श्चु:' पदेन **श, च, छ, ज, झ, ञ** वर्णानां ग्रहणं भवति । ( )

(ग) 'झलां जशोऽन्ते' इति सूत्रं चर्त्वविधायकम् । ( )

(घ) 'खरि च' इति सूत्रेण जश्त्वं भवति । ( )

(ङ) वागीश: सज्जन:, इत्यत्र श्चुत्वं भवति । ( )

(च) सत् कार्यम्, कश्चित्, उभयत्र चर्त्वं भवति । ( )

८. रिक्तस्थानं पूरयत –

(क) .................... इति सूत्रं श्चुत्वविधायकम् (ष्टुना ष्टु:, स्तो श्चुना श्चु:)

(ख( 'ष्टुना ष्टु:' इति सूत्रेण ............... भवति । (ष्टुत्वम्, जश्त्वम्)

(ग) 'खरि च' इति सूत्रेण ................. भवति । (जश्त्वम्, चर्त्वम्)

(घ) ..................... इति सूत्रं जश्त्वविधायकम् । (खरि च, झलां जशोऽन्ते)

(ङ) रामस् + शेते इत्यवस्थायां .................. सूत्रेण ................. इति रूपं सिद्धम् ।

(च) 'तत् + रूपम्' इत्यत्र' झलां जशोऽन्ते' इति सूत्रेण ............. 'तद्रूपम्' इति भवति ।

९. परस्परं समूहे मेलयत

| अ समूह : | आ समूह : |
|---|---|
| (क) ष्टुना ष्टुः | (क) जश्त्वम् |
| (ख) झलां जशोऽन्ते | (ख) ष्टुत्वम् |
| (ग) इको यणचि | (ग) चर्त्वम् |
| (घ) खरि च | (घ) दीर्घः |
| (ङ) अकः सवर्णे दीर्घः | (ग) यण् |

## विशेष अभ्यास

१. 'झलां जशोऽन्ते' यस सूत्रले झल् प्रत्याहारमा आउने वर्णका स्थानमा 'जश्' प्रत्याहारमा आउने वर्ण हुन्छन् भन्ने बताउँछ । झल्का ठाउँमा जश् हुँदा उच्चारण स्थान मिल्दो वर्ण हुन्छ । जस्तै-

| झल्वर्ण | स्थान | जश्वर्ण |
|---|---|---|
| झ, ज, छ, च, श, | तालु | ज् |
| भ्, ब्, फ्, प् | ओष्ठ | ब् |
| घ्, ग्, ख्, क्, ह्, | कण्ठ | ग् |
| ढ्, ड् ठ्, ट्, ष् | मूर्धा | ड् |
| ध्, द्, थ्, त्, स् | दन्त | द |

२. स्तोः श्चुना श्चुः स् त् थ् द् ध न का अगाडि या पछाडि श् च् छ् ज्, झ् ञ्, वर्ण आएमा स्, त्, थ्, द्, ध्, न् का ठाउँमा श्, च्, छ्, ज्, झ्, ञ् वर्ण हुन्छन् ।

३. ष्टुना ष्टुः ष्, ट्, ठ्, ड्, ढ्, ण्, का साथ स्, त्, थ्, द्, ध, न्, को योग भएमा स्, त्, थ्, द्, ध्, न् का ठाउँमा ष्, ट्, ठ्, ड्, ढ् र ण वर्ण हुन्छन् ।

## शब्दार्थ

| | | |
|---|---|---|
| हरिश्शेते | = | हरि सुत्छ । |
| रामश्शेते | = | राम सुत्छ । |
| सच्चित् | = | सत्य र ज्ञान स्वरूप । |
| उच्चारणम् | = | उच्चारण (बोलाइ) । |
| शार्ङ्गिञ्जय: | = | हे विष्णु जय होस् । |
| रामष्षष्ठ: | = | राम छैठौं (छ) । |
| रामष्टीकते | = | राम जान्छ (टीका लेख्छ) । |
| पेष्टा | = | पिँध्ने मान्छे |
| उड्डयनम् | = | उड्ने काम । |
| तट्टीका | = | त्यो व्याख्या । |
| वागीश: | = | बृहस्पति |
| जगदीश: | = | जगत्का मालिक (भगवान्) । |
| अजन्त: | = | स्वरवर्ण अन्तमा हुने । |
| दिगीश: | = | दिशाका मालिक । |
| सुबन्त: | = | सुप् अन्तमा हुने । |
| सत् कर्म | = | राम्रो काम । |

अष्टमः पाठः

# हल्सन्धिः

(अनुनासिकविधिसूत्रम्)

६।१ ७।१ १।१ ०

सूत्र-३५ **यरोऽनुनासिकेऽनुनासिको वा** ८ । ४ । ४५

**यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्** । एतन्मुरारिः, एतद्मुरारिः।

(पदान्तस्य यर् प्रत्याहारस्थवर्णस्य स्थाने विकल्पेन अनुनासिको भवति अनुनासिके परे । यथा - 'एतद् + मुरारिः' इत्यत्र पदान्तः यर् प्रत्याहारस्थः वर्णः 'दकारः' तस्य स्थाने अनुनासिकः वर्गस्थः पञ्चमः वर्णः 'न्' भवति अनुनासिके मकारे परे तथा च 'एतन्मुरारिः' इति भवति ।

एवमेव - दिक् + नागः = दिङ्नागः, सद् + मतिः = सन्मतिः, पद् + नगः = पन्नगः, तत् + न = तन्न इत्यादयः सिद्ध्यन्ति ।)

(अनुस्वारविधायकं सूत्रम्)

१।१

सूत्र-३६ **मोऽनुस्वारः** ८ । ३ । २३

**मान्तस्य पदस्यानुस्वारो हलि** । हरिं वन्दे ।

(मकारान्तस्य पदस्य स्थाने अनुस्वारो भवति हल् पत्याहारस्थेषु वर्णेषु परेषु । यथा- 'हरिम् + वन्दे' इत्यत्र मान्तं पदं 'हरिम्' इति तस्य मकारस्य'स्थाने अनुस्वारे 'हरिं वन्दे' इति सिद्ध्यति । एवमेव - गृहम् + गच्छति = गृहं गच्छति, पाठम् + पठति = पाठं पठति, गुरुम् + नमति + गुरुं नमति, किम् + करोति = किं करोति, फलम् + खादति = फलं खादति इत्यादयःअपि सिद्ध्यन्ति ।)

### (अनुस्वारविधिसूत्रम्)

६१ ० ६१ ७१

**सूत्र-३७ नश्चापदान्तस्य झलि ८ । ३ । २५**

**नस्य मस्य चापदान्तस्य झल्यनुस्वारः ।** यशांसि । आक्रंस्यते ।

(अपदान्तस्य नकारस्य मकारस्य च स्थाने अनुस्वारः भवति झल् प्रत्याहारस्थेषु वर्णेषु परतः । यथा - 'यशान् + सि' इत्यत्र अपदान्तस्य नकारस्य स्थाने झल् = सकारे परे अनुस्वारे 'यशांसि' इति सिद्ध्यति । एवमेव - पयान् + सि = पयांसि, आक्रम् + स्यते = आक्रंस्यते, नम् + स्यति = नंस्यति, संगम् + स्यते = संगंस्यते, अनम् + सीत् = अनंसीत्, इत्यादयः सिद्ध्यन्ति ।)

### (परसवर्णविधिसूत्रम्)

६१ ७१ ११

**सूत्र-३८ अनुस्वारस्य ययि परसवर्णः ८ । ४ । ५८**

**स्पष्टम् । शान्त : ।**

(अनुस्वारस्य स्थाने परसवर्णः भवति यय् प्रत्याहारस्थेषु वर्णेषु परतः । यथा- शां + तः अनुस्वारस्य स्थाने 'यय्'प्रत्याहारस्थे तकारे परे परसवर्णे नकारे 'शान्तः' इति भवति । एवमेव-अं + कितः=अङ्कितः, अं + चितः= अञ्चितः, गुं + जति = गुञ्जति, कां + तः = कान्तः, गुं + फितः = गुम्फितः इत्यादयः सिद्ध्यन्ति ।)

## अभ्यासः

**प्रयोगसिद्धिप्रक्रिया**

१. एतन्मुरारिः, एतद्मुरारिः = 'एतद् + मुरारिः' इति स्थिते 'यरोऽनुनासिकेऽनुनासिको वा' इति सूत्रेण वैकल्पिके अनुनासिके दकारस्य स्थाने नकारे 'एतन्मुरारिः इति रूपं भवति । अनुनासिकाभावपक्षे 'एतद्मुरारिः' इति भवति ।

२. हरिं वन्दे - 'हरिम् + वन्दे' इत्यवस्थायां 'मोऽनुस्वारः' इति सूत्रेण अनुस्वारे 'हरिं वन्दे' इति सिद्ध्यति ।

३. यशांसि - यशान् + सि इति स्थिते 'नश्चापदान्तस्य झलि' इति सूत्रेण अनुस्वारे 'यशांसि' इति रुपं सिद्धम् ।

४. शान्तः - 'शां + तः' इति स्थिते 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रेण परसवर्णे 'शान्तः' इति रूपं सिद्धम् । एवमेव अन्यानि उदाहरणानि सिद्धयन्ति यथा-

(क) षड् + मासाः = षण्मासाः, षड्मासाः, धिग् + मूर्खम् = धिङ् मूर्खम्, धिग् मूर्खम्, त्वग् + मनसी = त्वङ्मनसी, त्वग् मनसी,

(ख) गृहम् + गच्छति = गृहं गच्छति, गुरुम् + नमति = गुरुं नमति, पुस्तकम् + पठति= पुस्तकं पठति, त्वम् + कथय= त्वं कथय, कृष्णम् + वन्दे = कृष्णं वन्दे ।

## अभ्यासार्थ प्रश्नाः

१. **अधोलिखितेषु शब्देषु सन्धिविच्छेदं कुरुत -**

एतन्नगरम्, मन्नीतिः, सन्मार्गः, धिङ्मूढम्, षण्णवतिः, ईश्वरं भजति, देवं नमति, शत्रुं जयति, दिव्यं सरः, शिवं पश्यति, श्रेयांसः, विद्वांसः, ।

२. **अधोलिखतेषु शब्देषु सन्धिं कुरुत -**

षड् + नवतिः, मद् + नीतिः, सद् + नीतिः, षड् + नाम्, कृष्णम् + पश्यति, लेखम् + लिखति, ईश्वरम् + भजति, गुं + फितः, कुं + ठितः, अं + चितः, ।

३. **अधोनिर्दिष्टानां सूत्राणाम् अर्थम् नेपालीभाषायां लिखत -**

यरोऽनुनासिकेऽनुनासिको वा, अनुस्वारस्य ययि परसवर्णः, मोऽनुस्वारः ।

४. **अधोलिखितानां प्रश्ननाम् उत्तराणि लिखत -**

(क) 'मोऽनुस्वार:' इति सूत्रं किं करोति ?

(ख) 'यय्' प्रत्याहारे के के वर्णा: आयान्ति ?

(ग) 'गुञ्जति' इत्यत्र परसवर्ण: केन भवति ?

(घ) 'सन्नीति:' इत्यस्य विच्छेद: क्रियताम् ।

५. **अधोलिखितानां शब्दानां सिद्धिप्रक्रियां प्रदर्शयत -**

त्वङ्मनसी, पुस्तकं पठति, कान्त:, शिवं वन्दे, आक्रंस्यते, अङ्कित: ।

६. **अधोलिखितेषु शुद्धवाक्येषु शुद्धतासूचकम् (√) अशुद्धेषु च अशुद्धतासूचकं (x) चिह्नं दर्शयत -**

(क) 'जगदीश:' इत्यत्र जश्त्वं भवति । ( )

(ख) 'मोऽनुस्वार:' इति सूत्रं नकारमकारयो: स्थाने अनुस्वारविधायकम् अस्ति । ( )

(ग) 'नश्चापदान्तरस्य झलि' इति सूत्रं मकारस्य अनुस्वारं करोति । ( )

(घ) 'कान्त:' इत्यत्र परसवर्ण: भवति । ( )

(ङ) 'अनुस्वारस्य ययि परसवर्ण:' इति सूत्रं परसवर्णविधायकम् । ( )

७. **रिक्तस्थानं पूरयत**

(क) अनुस्वारस्य .................... परसवर्ण: । (झलि, ययि)

(ख) मान्तस्य पदस्य ................ भवति । (अनुस्वार:, जश्त्वम्)

(ग) 'नश्चापदान्तस्य झलि' इति सूत्रम् ................... करोति । (अनुस्वारम्, परसवर्णम्)

(घ) पयान् + सि इत्यत्र ...................... भवति । (अनुस्वार:, परसवर्ण:)

(ङ) हरिम् + नमति इत्यत्र .................. इति सूत्रेण अनुस्वारे .................. इति रूपं सिद्धम् ।

(च) गुं + जति इत्यत्र ..................... इति सूत्रेण ........................ 'गुञ्जति' इति रूपं सिद्धम् ।

## विशेष अभ्यास

१. पदको अन्त्यमा 'यर्' (ह बाहेक सबै व्यञ्जनवर्ण) भएमा पछि अनुनासिक (वर्गका पञ्चमवर्ण = ङ, ञ, ण, न म) भएमा यर्का स्थानमा आफ्ना वर्गको पञ्चम वर्ण हुन्छ । यो सन्धि स्वेच्छिक छ, कहिले हुन्छ कहिले हुन्न ।

२. पछाडि 'हल्' वर्ण भएमा पदान्त 'म्' लाई अनुस्वार हुन्छ । स्वरवर्ण पर भएमा अनुस्वार हुँदैन ।

३. अपदान्त 'न' र 'म' का स्थानमा अनुस्वार हुन्छ परतिर वर्गका प्रथम, द्वितीय, तृतीय र चतुर्थ अक्षर भएमा ।

४. अनुस्वारभन्दा पर **'श ष स ह'** बाहेक अन्य व्यञ्जनवर्ण भएमा अनुस्वारलाई परतिर हुने व्यञ्जनको सवर्ण पञ्चमवर्ण हुन्छ ।

## शब्दार्थ

एतन्मुरारिः = यी विष्णु (हुन्) ।
दिङ्नागः = दिशाहरूका हात्ती ।
सन्मतिः = राम्रो बुद्धि ।
पन्नगः = सर्प ।
तन्न = त्यो (होइन) छैन ।
हरिं वन्दे = हरिलाई नमस्कार गर्छु ।
गृहं गच्छति = घर जान्छ ।
पाठं पठति = पाठ पढ्छ ।
गुरुं नमति = गुरुलाई नमस्कार गर्छ ।
किं करोति = के गर्छ ।
फलं खादति = फल खान्छ ।

यशांसि = धेरै यश (कीर्ति) ।
पयांसि = धेरै दूध, पानी ।
आक्रंस्यते = आक्रमण हुनेछ ।
शान्तः = शान्त ।
अङ्कितः = छाप लागेको, चिनु लागेको ।
अञ्चितः = पूजित ।
गुञ्जति = आवाज गर्छ, गुन्जन्छ ।
कान्तः = राम्रो ।
गुम्फितः = गाँसिएको ।
अनंसीत् = नमस्कार गऱ्यो ।
संगंस्यते = संगत हुनेछ ।

नवमः पाठः

# विसर्गसन्धिः

(रुत्वविधिसूत्रम्)

सूत्र-३९ **ससजुषो[६।२] रुः[१।१] ८ । २ । ६६**

**पदान्तस्य सस्य सजुषश्च रुः स्यात् ।**

(पदान्तस्य सकारस्य स्थाने सजुष् शब्दस्य षकारस्य स्थाने 'रु' भवति । 'रु' इत्यत्र उकारस्य 'उपदेशेऽजनुनासिक इत्' इति सूत्रेण इत्संज्ञा 'तस्य लोपः' इति सूत्रेण लोपे 'र्' अवशिष्टो भवति ।)

(विसर्गविधिसूत्रम्)

सूत्र-४० **खरवसानयोर्[७।२]विसर्जनीयः[१।१] ८ । ३ । १५**

**खरि अवसाने च पदान्तस्य रेफस्य विसर्गः ।**

'खर्' प्रत्याहारस्थेषु वर्णेषु परतः अवसाने (अन्ते) च पदान्तस्य रेफस्य विसर्गः स्यात् । यथा - राम + स् इत्यत्र सकारस्य स्थाने 'ससजुषो रुः' इति सूत्रेण रुत्वे उकारस्य इत्संज्ञायां लोपे च 'राम + र्' इति जाते अवसानत्वात् 'खरवसानयोर्विसर्जनीयः' इति सूत्रेण विसर्गे 'रामः' 'इति भवति ।)

(सत्वविधिसूत्रम्)

सूत्र-४१ **विसर्जनीयस्य[६।१] सः[१।१] ८ । ३ । ३४**

**खरि । विष्णुस्त्राता ।**

(विसर्जनीयस्य स्थाने सकारः स्यात् खर् प्रत्याहारस्थेषु वर्णेषु परतः । यथा 'विष्णुः + त्राता' इत्यत्र तकारे परे विसर्गस्य स्थाने सकारे 'विष्णुस्त्राता' इति भवति ।)

(सत्वविधिसूत्रम्)

सूत्र-४२ वा शरि ८ । ३ । ३६

**शरि विसर्गस्य विसर्गो वा ।** हरिः शेते, हरिश्शेते ।

(शर्प्रत्याहारस्थेषु वर्णेषु परतः विसर्गस्य स्थाने विकल्पेन विसर्गः स्यात् । यथा - 'हरिः + शेते' इत्यत्र 'विसर्जनीयस्य सः' इति सूत्रेण विसर्गस्य सकारे प्राप्ते 'वा शरि' इति सूत्रेण विसर्गस्य विकल्पेन विसर्गे 'हरिः शेते' इति भवति । विसर्गाभावपक्षे 'विसर्जनीयस्य सः' इति सूत्रेण सकारे हरिस् + शेते इति जाते 'स्तोः श्चुना श्चुः' इति सूत्रेण श्चुत्वे 'हरिश्शेते इति च भवति ।)

(उत्वविधिसूत्रम्)

सूत्र-४३ अतोरोरप्लुतादप्लुते ६ । १ । ११३

**अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति ।** शिवोऽर्च्यः ।

(प्लुतभिन्नाद् अकारात् परस्य 'रु' इत्यस्य स्थाने उकारो भवति, प्लुतभिन्ने अकारे परे । यथा - 'शिवस् + अर्च्यः' इत्यत्र पदान्तस्य सकारस्य स्थाने 'ससजुषो रुः' इति सूत्रेण रुत्वे 'शिवर् + अर्च्यः' इति जाते 'अतो रोरप्लुतादप्लुते' इति सूत्रेण' उत्वे शिव + उ + अर्च्यः' इत्यत्र 'आद् गुणः' यति सूत्रेण गुणे शिवो + अर्च्यः इति जाते 'एङः पदान्तादति' इति सूत्रेण पूर्वरूपे 'शिवोऽर्च्यः' इति भवति ।)

(उत्वविधिसूत्रम्)

सूत्र-४४ हशि च ६ । १ । ११४

तथा । शिवो वन्द्यः ।

(अप्लुताद् अकारात् परस्य 'रु' इत्यस्य स्थाने उकारः स्यात्, हश्-प्रत्याहारस्थेषु वर्णेषु परतः । यथा - 'देवस् + वन्द्यः' इत्यत्र 'ससजुषो रुः' इति सूत्रेण रुत्वे 'हशि च' इति सूत्रेण उत्वे 'देव उ वन्द्यः' इति जाते 'आद् गुणः' इति सूत्रेण गुणे देवोवन्द्यः' इति भवति ।

## अभ्यासः

१. 'रु' इत्यस्य स्थाने खरि परे अवसाने च विसर्गः भवति । यथा- कृष्णः, शिवः, मुकुन्दः, रमेशः इत्यादि ।

२. ह्रस्वाकारात् परस्य 'र' इत्यस्य स्थाने 'उ' भवति ह्रस्वाकारे परे यथा-सोऽपि, छात्रोऽयम्, सोऽवदत्, नृपोऽस्ति इत्यादि ।

३. ह्रस्वाकारात् परस्य 'रु' इत्यस्य स्थाने 'उ' भवति हश्प्रत्याहारस्थेषु वर्णेषु परतः । यथा-मृगो धावति, देवो हसति, छात्रो लिखति, रामो ब्रवीति इत्यादि ।

४. अवर्णातिरिक्तात् स्वरवर्णात् परस्य सकारस्य विसर्गस्य वा रेफः अवशिष्टो भवति । यथा - पितुः + इच्छा = पितुरिच्छा, हरिः + अवदत् = हरिरवदत्, गुरोः + भाषणंम् = गुरोर्भाषणम्, मुनेः + मौनम् = मुनेर्मौनम् ।

**प्रयोगसिद्धिप्रकार :**

(क) **विष्णुस्त्राता** - विष्णु:+त्राता 'इत्यत्र' विसर्जनीयस्य सः' इति सूत्रेण विसर्गस्य स्थाने सकारे 'विष्णुस्त्राता' इति रूपं सिद्धम् ।

(ख) **मोहनश्चलति** - 'मोहनः + चलति' इत्यत्र 'विसर्जनीयस्य सः' इति सूत्रेण सकारे 'मोहनस् + चलति' इति जाते 'स्तोः श्चुना श्चुः' इति सूत्रेण श्चुत्वेन शकारे 'मोहनश्चलति' इति रूपं सिद्धम् ।

(ग) **रामश्शेते** - रामः + शेते इत्यत्र 'विसर्जनीयस्य सः' इति सूत्रेण विसर्गस्य सत्वे प्राप्ते 'वा शरि' इति सूत्रेण वैकल्पिके विसर्गे रामः शेते इति भवति । विसर्गाभावपक्षे 'विसर्जनीयस्य सः' इति सूत्रेण सत्वे 'रामस् + शेते' इति 'जाते' 'स्तोः श्चुना श्चुः' इति सूत्रेण श्चुत्वे' रामश्शेते' इति भवति ।

(घ) **कोऽयम्** - 'कस् + अयम्' इत्यत्र 'ससजुषो रुः' इति सूत्रेण रुत्वे 'अतोरोरप्लुतादप्लुते' इति सूत्रेण उत्वे 'क उ अयम्' इति जाते 'आद् गुणः' इति सूत्रेण गुणे 'को + अयम्' इति जाते 'एङः पदान्तादति' इति सूत्रेण पूर्वरूपे 'कोऽयम्' इति सिद्ध्यति ।

(ङ) **शिवो वन्द्यः** - 'शिवस् + वन्द्यः' इत्यत्र 'ससजुषो रुः' इति सूत्रेण रुत्वे 'हशि च' इति सूत्रेण उत्वे 'आद् गुणः' इति सूत्रेण गुणे 'शिवो वन्द्यः' इति रूपं सिद्धम् ।

## अभ्यासार्थं प्रश्नाः

१. **अधोलिखितेषु शब्देषु सन्धिविच्छेदं कुरुत -**
छात्रस्तिष्ठति, गौश्चरति, वृक्षः फलति, बालकश्चलति, रामो ब्रवीति, नृपोऽयम्, कोऽस्ति, शिवोऽहम्, कस्त्वम्, बालको हसति ।

२. **अधोऽङ्कितेषु शब्देषु सन्धिं कुरुत -**
भानुः + तरति, कः + चलति, हरिः + शेते, सर्पः + सर्पति, धनुः +टङ्कारः, नृपस् + अहम्, बालकस् + अयम् ।

३. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थं लिखत -**
(क) अतोरोरप्लुतादप्लुते ।
(ख) खरवसानयोर्विसर्जनीयः ।
(ग) वा शरि ।

४. **अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत -**
(क) 'खरवसानयोविसर्जनीयः' इति सूत्रं किं करोति ?
(ख) विसर्गस्य स्थाने सत्वविधायकं सूत्रं किम् ?
(ग) 'नरो वदति' इत्यत्र उत्वविधायकं सूत्रं किम् ?
(घ) कीदृशस्य रेफस्य विसर्गो भवति ?
(ङ) 'हश्' प्रत्याहारस्थेषु वर्णेषु परतः केन सूत्रेण उत्वं भवति ?

५. **अधोलिखितानां प्रयोगाणां सिद्धिप्रक्रियां दर्शयत-**
रामस्त्राता, छात्रश्चलति, बालकोऽयम्, को हसति ।

६. अधोलिखितेषु शुद्धवाक्येषु शुद्धतासूचकं (√) चिह्नम् अशुद्धेषु च अशुद्धतासूचकं (x) चिह्नं दर्शयत -

(क) खरि पदान्तस्य रेफस्य विसर्गः भवति । ( )

(ख) शरि विसर्गस्य नित्यं सत्वं भवति । ( )

(ग) 'हश्' प्रत्याहारस्थेषु वर्णेषु परतः 'अतोरोरप्लुतादप्लुते' इति सूत्रेण उत्वं भवति । ( )

(घ) शिव रु + वन्द्यः, देव रु + अस्ति उभयत्र 'हशि च' इति प्रवर्तते । ( )

(ङ) मेघो गर्जति, शिवो नम्यः, उभयत्र सन्धिः तुल्या । ( )

(च) 'शिवोऽहम्' इत्यत्र 'अतोरोरप्लुतादप्लुते' इति प्रवर्तते । ( )

७. रिक्तस्थानं पूरयत -

(क) खरि पदान्तस्य ............... विसर्गः भवति । (रेफस्य, विसर्गस्य)

(ख) पदान्तस्य सस्य रुत्वविधायकं ............ इति सूत्रम् (ससजुषो रुः वा शरि)

(ग) ........................................ इति सूत्रेण 'रु' इत्यस्य स्थाने 'उ' भवति । (विसर्जनीयस्य सः, हशि च)

(घ) हरिः + शेते इत्यत्र ................... इति सूत्रेण विसर्गस्य विसर्गः भवति । (वा शरि, खरवसानयोर्विसर्जनीयः)

(ङ) 'हरिः + त्राता' इत्यत्र ................... इति सूत्रेण विसर्गस्य सकारे ................... इति भवति ।

८. परस्परं समूहे मेलयत

| अ समूह : | आ समूह : |
|---|---|
| (क) ससजुषो रुः | (क) वैकल्पिकं विसर्गविधायकम् |
| (ख) विसर्जनीयस्य सः | (ख) विसर्गविधायकम् |
| (ग) खरवसानयोर्विसर्जनीयः | (ग) रुत्वविधायकम् |
| (घ) हशि च | (घ) सत्वविधायकम् |
| (ङ) वा शरि | (ङ) उत्वविधायकम् |

## विशेष अभ्यास

१. अ, आ बाहेक अन्य स्वरवर्णदेखि 'स्' या विसर्ग पर भएमा र् बाँकी रहन्छ-पर तिर कुनै स्वर या व्यञ्जन वर्ण भएमा । जस्तै - हरिस् + अवदत् = हरिरवदत्, हरेः + द्रव्यम् = हरेर्द्रव्यम् इत्यादि ।

२. विसर्गपछि खर्प्रत्याहारका वर्ण (**ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स**) भएमा विसर्गका स्थानमा 'स्' हुन्छ । जस्तै - विष्णुः + त्रायते = विष्णुस्त्रायते । रामः + तिष्ठति = रामस्तिस्ठाति । बालः + चलति = बालश्चलति । रामः + षष्ठः = रामष्षष्ठः ।

३. ह्रस्व 'अ' देखि 'हश्' प्रत्याहारका वर्ण पर भएमा 'रु' का ठाउँमा 'ऊ' हुन्छ, 'उ' भए पछि 'आद् गुणः' ले गुण हुन्छ । जस्तै- रामस् + वदति = रामो वदति इत्यादि ।

४. ह्रस्व 'अ' देखि ह्रस्व 'अ' पर भएमा 'रु' का ठाउँमा 'उ' हुन्छ । त्यसपछि 'आद् गुणः' ले गुण र 'एङः पदान्तादति' ले पूर्वरूप हुन्छ । जस्तै - करु + अयम् क उ अयम् को + अयम् कोऽयम् इत्यादि ।

## शब्दार्थ

विष्णुस्त्राता = विष्णु रक्षक (हुन्) ।

शिवोऽर्च्यः = शिव पूजनीय (छन्) ।

सोऽपि = त्यो पनि ।

देवो हसति = देउता (हाँस्छन्) ।

देवो वन्द्यः = देउता वन्दनीय (छन्) ।

# विसर्गसन्धिः

दशमः पाठः

(रेफलोपविधिसूत्रम्)

६१ ७१

**सूत्र-४५ रो रि ८ । ३ । १४**

**रेफस्य रेफे परे लोपः ।**

(रेफस्य लोपः स्यात्, रकारे परे । यथा- 'पुनर् + रमते' इत्यत्र रकारे परे पूर्वरकारस्य लोपः भवति ।)

(दीर्घविधिसूत्रम्)

७१ ६१ ११ ६१

**सूत्र-४६ ढ्रलोपे पूर्वस्य दीर्घोऽणः ६ । ३ । १११**

**ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः ।** पुना रमते । हरी रम्यः । शम्भू राजते ।

(ढकारस्य लोपनिमित्ते ढकारे, रकारस्य लोपनिमित्ते रकारे च परे पूर्वस्थानाम् अ, इ, उ वर्णानां दीर्घः आदेशः भवति । यथा- पुनर् + रमते इत्यत्र 'रो रि' इति सूत्रेण रेफस्य लोपे सति रेफलोपनिमित्ते रकारे परे 'अकारस्य' 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्रेण दीर्घे 'पुना रमते' इति भवति ।)

(यत्वविधिसूत्रम्)

६१ ११ ७१

**सूत्र-४७ भो'भगोअघो अपूर्वस्य योऽशि ८ । ३ । १७**

**एतत्पूर्वस्य रोयदिशोऽशि ।**

(भो पूर्वस्य, भगो पूर्वस्य, अघो पूर्वस्य, अवर्णपूर्वस्य 'रु' इत्यस्य स्थाने 'य' आदेशः स्यात्, 'अश्' प्रत्याहारस्थेषु वर्णेषु परतः ।

(यलोपविधिसूत्रम्)

सूत्र-४८ लोपः शाकल्यस्य ८ । ३ । १९

**अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे ।** देवा इह, देवायिह ।

(अवर्णपूर्वयोः पदान्तयोः यकारवकारयोः विकल्पेन लोपः स्यात् 'अश्' प्रत्याहारस्थेषु वर्णेषु परतः । यथा - 'देवास् + इह' इत्यत्र सकारस्य 'ससजुषो रुः' इति सूत्रेण रुत्वे देवा रु + इह इति जाते अवर्णपूर्वस्य 'रु' इत्यस्य स्थाने इकाररूपे 'अश्' परे 'भो भगो अघो अपूर्वस्य योऽशि' इति सूत्रेण यकारे देवा य् + इह इति जाते 'लोपः शाकल्यस्य' इति सूत्रेण यलोपे देवा इह इति भवति ।)

(यलोपविधिसूत्रम्)

सूत्र-४९ हलि सर्वेषाम् ८ । ३ । २२

**भो भगो अघो अपूर्वस्य यस्य लोपः स्याद्धलि ।** भो देवाः । भगो नमस्ते । अघो याहि ।

(भो पूर्वस्य, भगो पूर्वस्य, अघो पूर्वस्य, अवर्णपूर्वस्य यकारस्य लोपः स्याद् 'हल्' प्रत्याहारस्थेषु वर्णेषु परतः । यथा - भोस् + देवाः इत्यत्र 'ससजुषो रुः' इति सूत्रेण रुत्वे भो रु + देवाः इति जाते 'भो भगो अघो अपूर्वस्य योऽशि' इति सूत्रेण यकारे 'भो य् + देवाः' इति जाते 'हलि सर्वेषाम्' इति सूत्रेण यकारलोपे 'भो देवाः' इति रूपं भवति ।)

(पूर्वशास्त्रं प्रति परशास्त्रस्यासिद्धत्वविधायकं सूत्रम्)

सूत्र-५० पूर्वत्रासिद्धम् ८ । २ । १

**सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् ।**

## (विप्रतिषेधसूत्रम्)

सूत्र-५१ विप्रतिषेधे परं कार्यम् १ । ४ । २

**तुल्यबलविरोधे परं कार्यं स्यात् । मनोरथः ।**

(अन्यत्र-अन्यत्र लब्धावकाशयोः सूत्रयोः एकस्मिन् प्रयोगे युगपत् प्राप्तिस् तुल्यबलविरोधः, तत्र पूर्वशास्त्रापेक्षया परशास्त्रस्य बलवत्त्वात् परशास्त्रविहितं 'कार्यं भवति । यथा - पुना रमते इत्यत्र 'रो रि' इत्यस्य चरितार्थता, 'शिवो वन्द्यः 'इत्यत्र 'हशि च' इति सूत्रस्य चरितार्थता । उभयोः मनर् + रथः इत्यत्र प्राप्तिः अस्ति 'रो रि' (८ । ३ । १४) इति सूत्रं हशि च (६ । १ । ११४) इति सूत्रापेक्षया परम्, अतः 'विप्रतिषेधे परं कार्यम्' इति सूत्रेण 'रो रि' इत्यस्य बलवत्त्वबोधनात् रेफलोपः प्राप्नोति, 'पूर्वत्रासिद्धम्' इति सूत्रेण सपादसप्ताध्यायीस्थसूत्रदृष्ट्या त्रिपादीस्थसूत्राणामसिद्धत्वबोधनात्, 'हशि च' इति सूत्रदृष्ट्या 'रो रि' इत्यस्यासिद्धत्वात् 'हशि च' इति सूत्रेण उत्वे 'मन + उ + रथः' इति जाते 'आद् गुणः' इति सूत्रेण गुणे 'मनोरथः' इति सिद्ध्यति ।)

### अभ्यासः

१. रकारे परे पूर्वस्य रकारस्य लोपः भवति । रेफात् पूर्वं यदि अ इ उ वर्णा आयान्ति तदा तेषां दीर्घः अपि भवति । यथा - पुनर् + रमते = पुना रमते, शम्भुर् + राजते = शम्भू राजते, हरिर् + रम्यः = हरी रम्यः, भूपतिर् + रक्षति = भूपती रक्षति, फेरुर् + रौति = फेरू रौति इत्यादि ।

२. 'ससजुषो रुः'[१] इति सूत्रेण यत्र 'रु' भवति तत्रैव 'हशि च' इति सूत्रम् 'अतो रोरप्लुतादप्लुते' इति सूत्रं प्रवर्तते । सामान्ये रेफे प्रवृत्तिर्न भवति । तथैव - 'भो भगोअघो अपूर्वस्य योऽशि' इति सूत्रमपि 'रु' इत्यस्य स्थाने यत्वविधायकम् ।

३. स्वरवर्णे परे यकारलोप: पाक्षिक: (एकस्मिन् पक्षे भवति, अपरस्मिन् पक्षे न भवति) व्यञ्जनवर्णे परे तु यकारलोप: नित्य : ।

**प्रयोगसधानप्रकार :**

(क) पुना रमते - पुनर् + रमते इत्यत्र 'रो रि' इति सूत्रेण रेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽण:' इति सूत्रेण दीर्घे 'पुना रमते' इति रूपं सिद्धम् ।

(ख) देवा इह-देवास् + इह इत्यत्र 'ससजुषो रु:' इति सूत्रेण रुत्वे 'देवा रु + इह' इति जाते 'भो भगोअघो अपूर्वस्य योऽशि' इति सूत्रेण यत्वे 'लोप: शाकल्यस्य' इति सूत्रेण वैकल्पिके यकारलोपे 'देवा इह' इति भवति । यलोपाभावपक्षे 'देवायिह' इत्यपि रूपं भवति ।

(ग) मनोरथ: - 'मनस् + रथ:' इत्यत्र 'ससजुषो रु:' इति सूत्रेण रत्वे 'मनर् + रथ:' इति जाते 'रो रि' इत्यनेन रेफलोपे 'हशि च' इत्यनेन उत्वे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इति सूत्रेण 'रो रि' इति सूत्रस्य बलबत्व बोधनात् रेफलोपे प्राप्ते 'पूर्वत्रासिद्धम्' इति सूत्रेण 'हशि च' इत्यपेक्षया 'रो रि' इत्यस्यासिद्धत्वात् 'हशि च' इति सूत्रेण उत्वे 'आद् गुण:' इति सूत्रेण गुणे 'मनोरथ:' इति रूपं सिद्धम् ।

## अभ्यासार्थ प्रश्ना:

१. **शुद्धम् उच्चारयत -**

(क) ढ्रलोपे पूर्वस्य दीर्घोऽण: ।

(ख) अतोरोरप्लुतादप्लुते ।

(ग) पूर्वत्रासिद्धम् ।

२. **अधोलिखितेषु शब्देषु सन्धिविच्छेदं कुरुत -**

गुरू राजते, नृपती रक्षति, देवा हसन्ति, भक्ता भजन्ति, अन्ताराष्ट्रिय:, भो बालका:, याज्ञिका यजन्ति, विप्रा आगता: ।

३. **अधोलिखितेषु शब्देषु सन्धिं कुरुत -**

फेरुर् + रौति, शिशुर्+रोदिति, कविर् + रम्य:, बालकास् + हसन्ति ।

४. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थं लिखत -**

(क) विप्रतिषेधे परं कार्यम् ।

(ख) पूर्वत्रासिद्धम् ।

(ग) ढ्रलोपे पूर्वस्य दीर्घोऽण: ।

५. **अधोऽङ्कितानां शब्दानां सिद्धिप्रक्रियां दर्शयत -**

हरी रम्य:, शिशू रोदिति, अघो याहि, मृग एति ।

६. **अधोनिर्दिष्टानां प्रश्नानाम् उत्तराणि लिखत -**

(क) 'रो रि' इति सूत्रं किं करोति ?

(ख) 'लोप: शाकल्यस्य' इति सूत्रं किं करोति ?

(ग) हलि परत: इकारलोपविधायकं सूत्रं किम् ?

(घ) 'पूर्वत्रासिद्धम्' इति सूत्रं किं करोति ?

७. **रिक्तस्थानं पूरयत -**

(क) 'भोभगोअघो अपूर्वस्य योऽशि' इति सूत्रं ...... विधायकम् (यलोप, यकार)

(ख) 'पुना रमते' इत्यत्र ..................................इति सूत्रेण दीर्घ: भवति ।
(ढ्रलोपे पूर्वस्य दीर्घोऽण:, रो रि)

(ग) 'हलि सर्वोषाम्' इति सूत्रेण .............. भवति । (यलोप:, उत्वम्)

(घ) लोप: शाकल्यस्य इति सूत्रेण .......... यलोपो भवति । (नित्यम्, विकल्पेन)

(ङ) शम्भुर् + राजते इत्यत्र ................ सूत्रेण रेफलोपे ...................
इति सूत्रेण दीर्घे .................... इति रूपं भवति ।

८. **अधोलिखितेषु वाक्येषु यलोपयुतान् उत्वसन्धि युतान्शब्दान् पृथक् कुरुत-**

(क) मनुष्या इह आगच्छन्ति ।

(ख) भो देवा आगच्छत ।

(ग) देवा इदानीं न आगच्छन्ति ।

(घ) महोदय ! कोऽयम् ।

(ङं) छात्रोऽयम्, अध्ययनाय गच्छति ।

(च) 'शिवोऽहम्' इति ज्ञानिन: कथयन्ति ।

## विशेष अभ्यास

१. अष्टाध्यायी ग्रन्थमा आठ अध्यायमा सूत्रहरू विभाजित छन् । प्रत्येक अध्यायमा चार पाउ छन् । सात अध्याय र एक पाउका सूत्रहरूका दृष्टिमा तीन पाउमा रहेका सूत्रहरू असिद्ध हुन्छन् । सात अध्याय र एक पाउलाई सपादसप्ताध्यायी भन्दछन् । तीन पाउलाई त्रिपादी भनिन्छ । यसरी 'पूर्वत्रासिद्धम्' सूत्रले सवा सात अध्यायका सूत्रका दृष्टिमा त्रिपादीका सूत्रलाई असिद्ध गर्दछ । त्रिपादीमा पनि पहिलेका सूत्रका दृष्टिमा पछिका सूत्र असिद्ध हुन्छन् ।

२. 'विप्रतिषेधे परं कार्यम्' सूत्रले पूर्वका दृष्टिमा परसूत्रलाई बलवान् बताउँछ । यो सूत्र सपाद सप्ताध्यायीमा मात्र लाग्छ ।

## शब्दार्थ

पुना रमते = फेरि रमाउँछ (रम्दैछ) ।

हरी रम्य: = हरि राम्रा छन् ।

अन्ताराष्ट्रिय: = राष्ट्रहरूका माझको ।

गुरू रुष्ट: = गुरु रिसाएका (छन्)

शिशू रोदिति = बच्चा रुन्छ ।

देवा इह = देउताहरू यहाँ ।

मृग एति = मृग जान्छ ।

देव आयाति = देउता आउँछन् ।

भो ! देवा: = हे देउताहरू हो ।

भगो ! नमस्ते = हे भगवान् ! तपाईंलाई नमस्कार छ ।

छात्रा हसन्ति = छात्रहरू हाँस्छन् ।

एकादशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

(प्रातिपदिकसंज्ञासूत्रम्)

१।१ १।१ १।१ १।१
**सूत्र-५२ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १ । २ । ४५**

**धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छदस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।**

(धातुभिन्नस्य प्रत्ययभिन्नस्य प्रत्ययान्तभिन्नस्य अर्थ[illegible]तः शब्दस्य प्रातिपदिक-संज्ञा भवति । यथा - राम इति शब्दस्वरूपं दशरथापत्यरूपम् अर्थं बोधयति अतः सार्थकं जातम्, 'राम' इति शब्दः धातुभिन्नः प्रत्ययभिन्नः प्रत्ययान्तभिन्नः अपि तथा च 'राम' इत्यस्य प्रातिपदिकसंज्ञा भवति ।)

(प्रातिपदिकसंज्ञासूत्रम्)

१।३ ०
**सूत्र-५३ कृत्तद्धितसमासाश्च १ । २ । ४६**

**कृत्तद्धितान्तौ समासाश्च तथा स्युः ।**

(कृदन्तस्य (यस्य शब्दस्य अन्ते कृत्प्रत्ययः भवति) तद्धितान्तस्य (यस्य शब्दस्य अन्ते तद्धितप्रत्ययः अस्ति) समासस्य च प्रातिपदिकसंज्ञा भवति । यथा - पाचक, कारक, औपगव, राजपुरुष इत्यादयः ।

(अधिकारसूत्रम्)

१।१
**सूत्र-५४ प्रत्ययः ३ । १ । १**

(पञ्चमाध्यायपर्यन्तम् अधिकारः । अनेन सूत्रेण सुऔजस् इत्यादीनां प्रत्ययसंज्ञा भवतीति बोध्यते)

(अधिकारसूत्रम्)

सूत्र-५५ परश्च ३।१।२

(अस्यापि पञ्चमाध्यायपर्यन्तम् अधिकार: ।)

(अनेन सूत्रेण स्वादय: प्रत्यया: प्रकृतित: परे भवन्ति इति बोध्यते)

(अधिकारसूत्रम्)

सूत्र-५६ ङ्याप्प्रातिपदिकात् ४।१।१

(ङ्यन्ताद् आबन्तात् प्रातिपदिकाच्चेति पञ्चमाध्यायपर्यन्तम् अधिकार:)

(अनेन 'ङी' प्रत्ययान्तात् 'आप्' प्रत्ययान्तात् प्रातिदिकसंज्ञकात् 'सु' आदय: प्रत्यया भवन्ति इति बोध्यते)

(स्वादिप्रत्ययविधिसूत्रम्)

सूत्र-५७ स्वौजसमौट्छष्टाभ्यां भिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२

ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे स्वादय: प्रत्यया: स्यु: ।

(सुप्प्रत्यया:)

सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ।

(विभक्तिसंज्ञासूत्रम्)

सूत्र-५८ विभक्तिश्च १।४।१०४

सुप्तिङौ विभक्तिसंज्ञौ स्त: ।

('सु औ जस्' इत्यादि एकविंशतिप्रत्ययानाम्, 'तिप् तस् झि' इत्यादि अष्टादश आदेशानां विभक्तिसंज्ञा भवति ।)

### (एकवचनादिसंज्ञासूत्रम्)

**सूत्र-५९ सुपः[६।१] १ । ४ । १०३**

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचन-द्विवचन-बहुवचनसंज्ञानि स्युः ।

(सु औ जस्, इत्यादि त्रयाणाम्, क्रमशः एकवचन-द्विवचन-बहुवचन संज्ञा भवति । यथा - 'सु' इत्यस्य एकवचनसंज्ञा, 'औ' इत्यस्य द्विवचनसंज्ञा, 'जस्' इत्यस्य बहुवचनसंज्ञा भवति । एवमेव सप्तसु विभक्तिषु बोध्यम् ।)

### (द्विवचनैकवचनविधिसूत्रम्)

**सूत्र-६० [७।२]द्वेकयोर्द्विवचनैकवचने[१।२] १ । ४ । २२**

**द्वित्वैकत्वयोरेते स्तः ।**

(एकत्वसङ्ख्यायाः विवक्षायाम् एकवचनबोधकप्रत्ययानां प्रयोगः, द्वित्वसङ्ख्यायाः विवक्षायां द्विवचनबोधकप्रत्ययानां प्रयोगः भवति । यथा - 'राम' इत्यस्माद् 'एकः राम' इति बोधनेच्छायां 'सु' विभक्तिः आयाति 'द्वौ रामौ' इत्यर्थ विवक्षायां च 'औ' विभक्तिः आयाति । एवम् अन्यत्रापि भवति ।)

### (बहुवचनविधिसूत्रम्)

**सूत्र-६१ [७।३]बहुषु बहुवचनम्[१।१] १ । ४ । २१**

**बहुत्वविवक्षायां बहुवचनं स्यात् ।**

(बहुत्वसङ्ख्यायाः विवक्षायां बहुवचनबोधकप्रत्ययानां प्रयोगः भवति, यथा- राम शब्दात् त्रयः रामाः, अथवा 'बहवः रामाः' इति बोधे अपेक्षिते बहुवचनबोधिका जस् विभक्तिः आयाति ।)

(अवसानसंज्ञासूत्रम्)

सूत्र-६२ विरामोऽवसानम् १ । ४ । ११०

**वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ रामः ।**

(वर्णानाम् अभावस्य अवसानसंज्ञा भवति । अर्थात् - यत्र वर्णोच्चारणान्तरम् अन्यवर्णस्य उच्चारणं न भवति तत्र अन्त्यवर्णस्य अवसानसंज्ञा भवति । यथा - 'राम र्' इत्यत्र रकारस्य उच्चारणान्तरं कस्यापि वर्णस्य उच्चारणं नास्ति अतः रकारस्य अवसानसंज्ञा भवति । अवसानसंज्ञायाः फलं 'खरवसानयोर्विसर्जनीयः' इति सूत्रेण विसर्गः ।)

**अभ्यासः**

**रूपसिद्धिप्रक्रिया**

१. 'राम' इत्यस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रेण प्रातिपदिकसंज्ञायां 'प्रत्ययः', परश्च, 'ङ्याप्प्रातिपदिकात्' इति सूत्रत्रयाधिकारे 'स्वौजसमौट्....' इत्यादि सूत्रेण स्वादीनाम् प्राप्तिर्भवति । 'सुपः' इति सूत्रेण एकवचनद्विवचन बहुवचनसंज्ञायां 'द्व्येकयोर्द्विवचनैकवचने' इति सूत्रेण एकत्वविवक्षायां प्रथमाया एकवचने 'सु' विभक्तौ 'राम सु' इति जाते 'उपदेशेऽजनुनासिक इत्' इति सूत्रेण उकारस्य इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'राम स्' इति जाते 'सुप्तिङन्तं पदम्' इति सूत्रेण पदसंज्ञायाम् पदान्तस्य सकारस्य 'ससजुषो रुः' इति सूत्रेण रुत्वे उकारस्य' 'उपदेशेऽजनुनासिक इत्' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'राम र्' इति जाते 'विरामोऽवसानम्' इति सूत्रेण अवसानसंज्ञायां 'खरवसानयोर्विसर्जनीयः' इति सूत्रेण विसर्गे 'रामः' रूपं सिद्धं भवति ।

एवम् - कृष्णः, शिवः, बालकः, घोटकः, शुकः, घटः, नृपः, अनलः, जनकः, खगः, धर्मः, मयूरः, सूर्यः, गजः, वानरः, नरः इत्यादयः शब्दाः सिद्ध्यन्ति ।

२. 'सु औ जस्' इत्यादीनाम् एकविंशतिविभक्तीनां ग्रहणं सुप् पदेन भवति ।

३. 'सु' इत्यत्र उकारस्य, 'जस्' इत्यत्र जकारस्य, 'औट्' इत्यत्र ट् कारस्य 'टा' इत्यत्र टकारस्य, 'शस्' इत्यत्र शकारस्य, ङे, ङसि, ङस्, ङि इत्यत्र ङकारस्य, 'सुप्' इत्यत्र पकारस्य च इत्संज्ञा भवति, इत्संज्ञकस्य लोपश्च भवति ।

**विभक्तिवचनज्ञापककोष्ठम्**

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सु | औ | जस् |
| द्वितीया | अम् | औट् | शस् |
| तृतीया | टा | भ्याम् | भिस् |
| चतुर्थी | ङे | भ्याम् | भ्यस् |
| पञ्चमी | ङसि | भ्याम् | भ्यस् |
| षष्ठी | ङस् | ओस् | आम् |
| सप्तमी | ङि | ओस् | सुप् |
| सम्बोधनम् | सु | औ | जस् |

## अभ्यासार्थ प्रश्नाः

१. **शुद्धम् उच्चारयत -**
अर्थवदधातुरप्रत्ययः प्रातिपदिकम्, कृत्तद्धितसमासाश्च, द्व्येकयोर्द्विवचनैकवचने ।

२. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थ लिखत -**
कृत्तद्धितसमासाश्च, बहुषु बहुवचनम्, सुपः ।

३. अधोनिर्दिष्टानां प्रश्नानाम्‌उत्तराणि दत्त –

(क) 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रं किं करोति ?
(उत्तरम् – 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रं प्रातिपदिकसंज्ञां करोति ।)

(ख) कृदन्तानां प्रातिपदिकसंज्ञाविधायकं सूत्रं किम् ?

(ग) विभक्तिसंज्ञाविधायकं सूत्रं निर्दिशत ।

(घ) 'विरामोऽवसानम्' इति सूत्रं किम् करोति ?

(ङ) 'सुप्' पदेन केषां ग्रहणं भवति ?

४. रिक्तस्थानं पूरयत –

(क) 'कृत्तिद्धतसमासाश्च' इति सूत्रं ................ संज्ञकम् । (प्रातिपदिक, विभक्ति)

(ख) प्रथमाविभक्तौ .................... प्रत्ययाः भवन्ति । (अम्, औट्, शस्, सु औ, जस्)

(ग) द्वित्वविवक्षायां ................ भवति । (द्विवचनम्, बहुवचनम्)

(घ) चतुर्थीबहुवचने ................ विभक्तिः भवति । (भिस्, भ्यस्)

(ङ) राम शब्दस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रेण ................. प्रथमाया एकवचने ............ विभक्तौ उकारस्य इत्संज्ञायां लोपे च सकारस्य .................. इति सूत्रेण रुत्वे .................... इति सूत्रेण विसर्गे रामः इति भवति ।

५. अधोलिखितेषु शुद्धवाक्येषु (√) चिह्नम् अशुद्धेषु च (x) चिह्नं दर्शयत –

(क) निरर्थकशब्दानां प्रातिपदिकसंज्ञा भवति । ( )

(ख) 'सु औ जस्' प्रत्ययाः प्रातिपदिकाद् भवन्ति । ( )

(ग) बहुत्वविक्षायां बहुवचनं भवति । ( )

(घ) 'सु औ जस्' प्रत्ययाः विभक्तिसंज्ञका भवन्ति । ( )

(ङ) 'सुप्' पदेन एकविंशतिप्रत्ययानां ग्रहणं भवति । ( )

(च) सुबन्तस्य पदसंज्ञा न भवति । ( )

६. **अधोनिर्दिष्टानां शब्दानां सिद्धिप्रक्रियां दर्शयत -**

नरः, शुकः, गजः ।

७. **'स्वौजसमौट्' इति सूत्रं पूरयित्वा अभ्यासपुस्तिकायां लिखत ।**

८. **नेपालीभाषायाम् अनुवादं कुरुत -**

(क) रामः पठति ।

(ख) अश्वः धावति ।

(ग) बालकः हसति ।

(घ) नर : लिखति ।

(ङ) मयूर : नृत्यति ।

## विशेष अभ्यास

(क) संज्ञा शब्दका रूप सिद्ध गर्दा पाठमा उल्लेख भएका सूत्रहरूको अर्थको अभ्यास हुनु आवश्यक छ । सूत्रको प्रवृत्ति भएपछि शब्दको स्वरूप परिवर्तनको क्रम पनि जान्नु पर्दछ ।

(ख) व्यवहारमा प्रचलित अरू संज्ञा शब्दहरूको (राम शब्दसँग मिल्ने खालका) रूपसिद्धिको अभ्यास पनि हुनु आवश्यक छ ।

(ग) पहिलेका पाठमा अभ्यास गरिसकेका सूत्रहरूको पुनरावृत्ति गर्नुपर्छ र आवश्यक स्थलमा तिनको उपयोग पनि गर्नुपर्दछ । जस्तै - यस पाठमा पहिले आएका - उपदेशेऽजनुनासिक इत्, तस्य लोपः, ससजुषो रुः, खरवसानयोर्विसर्जनीयः, सुप्तिङन्तं पदम् सूत्रहरूको पुनरावृत्ति भएको छ । यस्तै अन्य पाठमा यस पाठका सूत्रहरूको आवृत्ति हुनसक्छ । यस कुरामा ध्यान पुऱ्याउनु पर्दछ ।

## शब्दार्थ

| | | |
|---|---|---|
| सुप् | = | 'सु औ ज स्' को 'सु' देखि 'सुप्' का 'प' सम्मका सबै विभक्तिहरू । |
| अवसानम् | = | अन्त्य (टुङ्गो) समाप्ति । |
| एकत्वम् | = | एक हुनाको अवस्था । |
| द्वित्वम् | = | दुइ हुनाको अवस्था । |
| बहुत्वम् | = | धेरै हुनाको अवस्था |
| घोटकः | = | घोडा (एक) । |
| मयूरः | = | मुजूर (एक) । |
| घटः | = | घडा (एक) गाग्रो । |
| गजः | = | हात्ती (एक) । |
| नृपः | = | राजा (एक) । |
| वानरः | = | बाँदर (एक) । |
| अनलः | = | आगो (एक) । |
| जनकः | = | पिता (बाबु) (एक) । |
| खगः | = | चरा (एक) । |
| धर्मः | = | पुण्यकर्म, व्यक्ति वा वस्तुमा हुने स्वाभाविक गुण । |

द्वादशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

(एकशेषनियमसूत्रम्)

६।३ १।१ ७।१

**सूत्र-६३ सरूपाणामेकशेष एकविभक्तौ १ । २ । ६४**

**एकविभक्तौ यानि सरुपाण्येव दृष्टानि तेषामेक एव शिष्यते ।**

(समानविभक्तौ परतः येषां शब्दानां समानं रूपं भवति तेषाम् एक एव शिष्यते अवशिष्टो भवति । यथा - यदा द्वयोः रामयोः बोधो भवतु' इति वक्तुः तात्पर्यं तदा 'रामश्च रामश्च' इति राम शब्दस्य वारद्वयं पाठे प्राप्ते, अनेन सूत्रेण एकशेषे एकेनैव 'रामेण' द्वयोःबोधो भवति । एवम् - बहूनां रामाणां बोधो भवतु इति तात्पर्येण 'रामश्च रामश्च रामश्च' इति त्रयाणां रामशब्दानां प्रयोगे प्राप्ते अनेन सूत्रेण एकशेषे 'राम' इति एकस्यैव शेषः भवति ।)

(पूर्वसवर्णदीर्घविधिसूत्रम्)

६।२ १।१

**सूत्र-६४ प्रथमयोः पूर्वसवर्णः ६ । १ । १०२**

**अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् ।**

(अ, इ, उ, ऋ, लृ वर्णेभ्यः प्रथमाविभक्तेः द्वितीयाविभक्तेः स्वरवर्णेषु परतः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशः स्यात् । यथा - 'राम + औ' इत्यत्र अक् = अन्त्य : अकारः, ततः प्रथमाविभक्तेः 'अच्' औकारः, एवञ्च पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घे प्राप्ते)

(पूर्वसवर्णदीर्घनिषेधसूत्रम्)

० ५१ ७१
सूत्र-६५ नादिचि ६ । १ । १०४

**आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि - रामौ ।**

(अवर्णाद् इ उ ऋ लृ ए ओ ऐ औ वर्णेषु परतः पूर्वसवर्णदीर्घ एकादेशः न भवति । यथा - 'राम + औ' इत्यत्र 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते अवर्णाद् इचि = औकारे परे पूर्वसवर्णदीर्घस्य निषेधः भवति । तथा च 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'रामौ' इति भवति ।)

(इत्संज्ञासूत्रम्)

१२
सूत्र-६६ चुटू १ । ३ । ७

**प्रत्ययाद्यौ चुटू इतौ स्तः । रामाः ।**

(च, छ, ज, झ, ञ, ट, ठ, ड, ढ, ण वर्णाः यदि प्रत्ययस्य आदौ आयान्ति तदा तेषाम् इत्संज्ञा भवति । इत्संज्ञायाः फलं 'तस्य लोपः' इति सूत्रेण लोपः । यथा-राम शब्दात् जस् विभक्तौ 'राम + जस्' इति स्थिते प्रत्ययस्य आदौ चवर्गस्थः वर्णः जकारः अस्ति अतः तस्य इत्संज्ञा भवति । इत्संज्ञायां च 'तस्य लोपः' इति सूत्रेण लोपे 'राम + अस्' इति भवति । 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे 'रामास्' इति जाते पदसंज्ञायां पदान्तस्य सकारस्य रुत्वे विसर्गे 'रामाः' इति भवति ।)

(सम्बुद्धिसंज्ञासूत्रम्)

११ ११
सूत्र-६७ एकवचनं सम्बुद्धिः २ । ३ । ४९

**सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ।**

(सम्बोधने प्रथमाया एकवचनस्य 'सु' इत्यस्य सम्बुद्धिसंज्ञा भवति ।)

(अङ्गसंज्ञासूत्रम्)

५।१ १।१ १।१ ७।१ १।१

सूत्र-६८ **यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ४ । १३**

**यः प्रत्ययो यस्मात् क्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात् ।**

(यस्मात् प्रकृतितः प्रत्ययस्य विधानम् अस्ति प्रत्यये परे तदादिशब्दस्वरूपम् अङ्गसंज्ञकं भवति । यथा - 'राम + सु' इत्यत्र 'सु' प्रत्ययस्य विधानं 'राम' शब्दात् कृतम् अतः 'सु' प्रत्यये परे 'राम' इत्यस्य अङ्गसंज्ञा भवति ।)

(सम्बुद्धिहल् लोपविधिसूत्रम्)

५।१ ६।१

सूत्र-६९ **एङ्ह्रस्वात् सम्बुद्धेः ६ । १ । ६९**

**एङन्ताद् ह्रस्वान्ताच्चाङ्गाद् हल्लुप्यते सम्बुद्धेश्चेत् ।** हे राम । हे रामौ । हे रामाः ।

(एङन्ताद् ह्रस्वान्ताद् अङ्गात् परस्य हलः लोपः स्यात्, स हल् यदि सम्बुद्धेः अवयवः (सम्बोधने प्रथमाया एकवचनं) स्यात् । यथा- 'हे राम + सु' इत्यत्र उकारस्य इत्संज्ञायां लोपे च कृते 'एकवचनं सम्बुद्धिः' इति सूत्रेण सम्बुद्धिसंज्ञायाम्, 'यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्' इति सूत्रेण 'राम' इत्यस्य अङ्गसंज्ञायां ह्रस्वान्तम् अङ्गं 'राम' इति तस्मात् परस्य सम्बुद्धेः हलः सकारस्य 'एङ्ह्रस्वात् सम्बुद्धेः' इति सूत्रेण लोपः भवति । तथा च हे राम इति रूपं भवति । एङन्तस्य उदाहरणं यथा - 'हे हरे + स्' इत्यत्र एङन्तम् अङ्गं 'हरे' इति ततः परस्य सम्बुद्धेः हलः सकारस्य लोपे' हे हरे' इति भवति ।)

## अभ्यासः

१. सम्बोधने हे, भो, रे, अरे इत्येषां पूर्वप्रयोगो भवति।

२. अवर्णाद् 'औ' परतः पूर्वसवर्णदीर्घः न भवति किन्तु 'वृद्धिरेचि' इति सूत्रेण वृद्धिर्भवति।

**प्रयोगसाधनप्रकारः**

**'रामौ'** 'रामश्च रामश्च' इत्यर्थे 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रेण एकशेषे 'रामशब्दात् प्रातिपदिकात् द्वित्वविवक्षायां प्रथमाया द्विवचने 'औ' विभक्तौ 'राम + औ' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्ण दीर्घे प्राप्ते 'नादिचि' इति सूत्रेण तन्निषेधे 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'रामौ' इति रूपं सिद्धम्। एवमेव - बालकौ, नरौ, शुकौ, घोटकौ, वानरौ, मूषकौ, मयूरौ, खगौ, छात्रौ, इत्यादयः सिद्ध्यन्ति।

**हे राम** रामशब्दात् प्रातिपदिकात् सम्बुद्धिविवक्षायां प्रथमाया एकवचने 'सु' विभक्तौ 'एकवचनं सम्बुद्धिः' इति सूत्रेण सम्बुद्धिसंज्ञायाम्, उकारस्य इत्संज्ञायां लोपे च कृते 'राम + स्' इति जाते 'यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्' इति सूत्रेण अङ्गः संज्ञायाम् 'एङ्ह्रस्वात् सम्बुद्धेः' इति सूत्रेण सकार लोपे 'हे' शब्दस्य पूर्वप्रयोगे' हे राम' इति सिद्धयति। एवम् - हे बालक। हे नर। हे छात्र। हे शुक। हे वानर। हे मूषक। भो कृष्ण। भो शिव। इत्यादयः सिद्धयन्ति।

**रामा** 'रामश्च रामश्च रामश्च' इत्यत्र 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रेण एकशेषे 'राम' शब्दात् प्रथमायाः बहुवचने 'जस्' विभक्तौ जकारस्य 'चुटू' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'राम + अस्' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे 'रामास्' इति जाते सकारस्य पदान्तत्वात् रुत्वे विसर्गे रामाः 'इति रूप' सिद्धम्। एवम् - बालकाः, नराः, शुका, घोटकाः, वानराः, मूषकाः, मयूराः, खगाः, छात्राः, इत्यादयः सिद्ध्यन्ति।

## अभ्यासार्थ प्रश्नाः

१. अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थं लिखत -

(क) एङ्ह्रस्वात् सम्बुद्धेः ।

(ख) सरूपाणामेकशेष एकविभक्तौ ।

(ग) चुटू ।

२. अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत -

(क) 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रं किं करोति ?

(ख) पूर्वसवर्णदीर्घविधायकं सूत्रं किम् ?

(ग) 'चुटू' इंति सूत्रं कुत्र प्रवर्तते ?

(घ) कस्य सम्बुद्धिसंज्ञा भवति ?

(ङ) अङ्गसंज्ञाविधायकं सूत्रं किम् ?

३. रिक्तस्थानं पूरयत -

(क) प्रथमायाः द्विवचने ............... विभक्तिः आयाति । (जस्, औ, सु)

(ख) ..................... इति सूत्रं सम्बुद्धिसंज्ञाविधायकम् ।

(एङ्ह्रस्वात् सम्बुद्धेः, एकवचनं सम्बुद्धिः, चुटू)

(ग) ........ इति सूत्रं पूर्वसवर्णदीर्घविधायकम् । (प्रथमयोः पूर्वसवर्णः, नादिचि)

(घ) प्रथमायाः ............. सम्बुद्धिसंज्ञा भवति । (एकवचनस्य, बहुवचनस्य)

(ङ) रामशब्दात् प्रथमायाः द्विवचने ..................... विभक्तौ .............. इति सूत्रेण पूर्वसवर्ण दीर्घे प्राप्ते ...................... इति सूत्रेण निषेधे ............. इति सूत्रेण वृद्धौ ................. इति रूपं सिद्धम् ।

४. **अधोनिर्दिष्टेषु शुद्धवाक्येषु (√) चिह्नम् अशुद्धेषु च (x) चिह्नं दर्शयत**

(क) 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इति अङ्गसंज्ञां करोति । ( )

(ख) 'एङ्ह्रस्वात् सम्बुद्धेः' इति सूत्रं सम्बुद्धिसंज्ञकम् । ( )

(ग) 'चुटू' इति सूत्रम् इत्संज्ञकम् । ( )

(घ) 'नादिचि' इति सूत्रं पूर्वसवर्णदीर्घविधायकम् । ( )

(ङ) चवर्गे 'च छ ज झ ञ' वर्णाः आयान्ति । ( )

(च) 'इच्' प्रत्याहारे 'अ इ उ ऋ लृ ए ओ' वर्णाः आयान्ति । ( )

५. **अधोनिर्दिष्टानां शब्दानां सिद्धिप्रक्रियां दर्शयत –**

शुकौ, नराः, हे बालक ! मूषकाः, मयूराः ।

६. **वानरशब्दस्य प्रथमायाः रूपाणि लिखत ।**

७. **परस्परं समूहे मेलयत**

| अ समूह : | आ समूह : |
|---|---|
| (क) नादिचि | (क) इत्संज्ञकम् |
| (ख) चुटू | (ख) दीर्घनिषेधकम् |
| (ग) प्रथमयोः पूर्वसवर्णः | (ग) हल्लोपविधायकम् |
| (घ) एकवचनं सम्बुद्धिः | (घ) पूर्वसवर्णदीर्घविधायकम् |
| (ङ) एङ्ह्रस्वात् सम्बुद्धेः | (ङ) सम्बुद्धिसंज्ञकम् |

८. **नेपालीभाषायाम् अनुवादं कुरुत**

(क) बालकौ पठतः ।

(ख) बालकाः पठन्ति ।

(ग) नरौ गच्छतः ।

(घ) सूर्यः उदेति ।

(ङ) शुकौ खादतः ।

(च) वानराः खादन्ति ।

## विशेष अभ्यास

१. संज्ञाशब्दको वचन अनुसार क्रियापदको पनि वचन परिवर्तन गरेर वाक्य निर्माण गर्नुपर्दछ । जस्तै - रामः पठति, रामौ पठतः, रामाः पठन्ति । बालकः खादति, बालकौ खादतः, बालकाः खादन्ति, आदि ।

अकारान्त पुंल्लिङ्गी शब्दहरूको रूप तालिका र केही व्यावहारिक धातुको लट्लकार प्रथम पुरुषका रूपहरू -

| शब्द | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| राम | रामः | रामौ | रामाः |
| बालक | बालकः | बालकौ | बालकाः |
| घोटक | घोटकः | घोटकौ | घोटकाः |
| शुक | शुकः | शुकौ | शुकाः |
| नर | नरः | नरौ | नराः |
| मनुष्य | मनुष्यः | मनुष्यौ | मनुष्याः |
| खग | खगः | खगौ | खगाः |
| **धातु** | **एकवचन** | **द्विवचन** | **बहुवचन** |
| पठ् | पठति | पठतः | पठन्ति |
| हस् | हसति | हसतः | हसन्ति |
| लिख् | लिखति | लिखतः | लिखन्ति |
| खाद् | खादति | खादतः | खादन्ति |
| पा (पिब्) | पिबति | पिबतः | पिबन्ति |
| गम् (गच्छ्) | गच्छति | गच्छतः | गच्छन्ति |
| धाव् | धावति | धावतः | धावन्ति |
| खेल् | खेलति | खेलतः | खेलन्ति |

## शब्दार्थ

| | | | | | |
|---|---|---|---|---|---|
| पठ् | = | पढ्नु । | पठति | = | पढ्छ । |
| हस् | = | हाँस्नु । | हसति | = | हाँस्छ । |
| लिख् | = | लेख्नु । | लिखति | = | लेख्छ । |
| खाद् | = | खानु । | खादति | = | खान्छ । |
| पा (पिब) | = | पिउनु । | पिबति | = | पिउँछ । |
| गम् (गच्छ) | = | जानु । | गच्छति | = | जान्छ । |
| धाव् | = | दौड्नु । | धावति | = | दौडन्छ । |
| खेल् | = | खेल्नु । | खेलति | = | खेल्छ । |

त्रयोदशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

(पूर्वरूपविधिसूत्रम्)

७।१ १।१

सूत्र-७० **अमि पूर्वः ६ । १ । १०७**

**अकोऽम्यचि पूर्वरूपमेकादेशः स्यात् । रामम् । रामौ ।**

('उ इ उ ऋ ऌ' वर्णेभ्यः 'अम्' सम्बन्धि 'अच्' परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यात् । यथा - 'राम' शब्दात् 'अम्' विभक्तौ 'राम + अम्' इति जाते 'अमि पूर्वः' इति सूत्रेण पूर्वरूपम् एकादेशे 'रामम्' इति भवति । द्वितीया द्विवचने 'रामौ' इति भवति ।)

(इत्संज्ञासूत्रम्)

१।१ ७।१

सूत्र-७१ **लशक्वतद्धिते १ । ३ । ८**

**तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ।**

(प्रत्ययस्य आद्यवयवानां 'ल श क ख ग घ ङ' वर्णानाम् इत्संज्ञा भवति तद्धितं विहाय । अर्थात् - तद्धितप्रत्यस्य इत्संज्ञा न भवति । यथा राम+शस् इत्यत्र शकारस्य 'लशक्वतद्धिते' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'राम + अस्' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे 'रामास्' इति भवति ।)

(नकारविधिसूत्रम्)

५।१ ६।१ १।१ ७।१

सूत्र-७२ **तस्माच्छसो नः पुंसि ६ । १ । १०३**

**पूर्वसवर्णदीर्घात् परो यः शसः सस्तस्य नः स्यात् पुंसि ।**

(पूर्वसवर्णदीर्घात् परः यः 'शस्' प्रत्ययस्य सकारः तस्य स्थाने नकारः स्यात् पुँल्लिङ्गे । यथा - 'रामास्' इत्यत्र पूर्वसवर्णदीर्घ : आकारः ततः परः 'शस्' प्रत्ययस्य सकारः 'अस्ति अतः' तस्य स्थाने नकारः भवति, एवञ्च 'रामान्' इति भवति ।)

(णत्वविधिसूत्रम्)

सूत्र-७३ अट्कुप्वाङ्नुम्व्यवाये[७।१]ऽपि[०] ८ । ४ । २

**अट्, कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथा सम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे ।**

(अट्प्रत्याहारस्थवर्णाः कवर्गः पवर्गः आङ् नुम् एतैः पृथक् पृथक् व्यवधाने सम्मिलितैः, व्यवधाने वा रेफात् षकाराद् वा परस्य नस्य णः स्यात् अखण्डपदे (एकपदे) । यथा - 'रामान्' इत्यत्र रकारात् परः नकारः अस्ति, मध्ये 'आ म् आ' वर्णानां व्यवधानेऽपि णत्वं प्राप्नोति ।)

(णत्वनिषेधसूत्रम्)

सूत्र-७४ पदान्तस्य[६।१] ८ । ४ । ३७

**नस्य णो न । रामान् ।**

(पदान्ते विद्यमानस्य नस्य 'णः' न भवति । यथा-'रामान्' इत्यस्य सुबन्तत्वेन 'सुप्तिङन्तं पदम्' इति सूत्रेण पदसंज्ञा भवति । नकारः पदस्यान्ते विद्यते अतः नकारस्य णत्वं न भवति, किन्तु नकार एव तिष्ठति अतः द्वितीयाया बहुवचने 'रामान्' इति भवति ।

(इनाद्यादेश विधिसूत्रम्)

सूत्र-७५ टाङसिङसामिनात्स्याः ७ । १ । १२

[६।३] [१।३]

**अदन्ताट्टादीनामिनादयः स्युः । णत्वम् - रामेण ।**

(ह्रस्वकारान्ताद् अङ्गात् परस्य 'टा' इत्यस्य स्थाने इन, 'ङसि' इत्यस्य स्थाने आत्, 'ङस्' इत्यस्य स्थाने 'स्य' आदेशाः भवन्ति । यथा- 'राम' इत्यस्मात् प्रातिपदिकात् तृतीयायाः एकवचने 'टा' विभक्तौ टकारस्य 'चुटू' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'राम + आ' इति जाते

'टाङसिङसामिनात्स्या:' इति सूत्रेण 'इन' आदेशे 'राम + इन' इत्यत्र 'आद् गुण:' इति सूत्रेण गुणे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति सूत्रेण णत्वे 'रामेण' इति भवति ।)

(दीर्घविधिसूत्रम्)

७।१ ०

सूत्र-७६ **सुपि च** ७ । ३ । १०२

**यञादौ सुपि अतोऽङ्गस्य दीर्घ:** । रामाभ्याम् ।

(यञ्प्रत्याहारस्था: वर्णा: (य व र ल ञ म ङ ण न झ भ वर्णा:) आदौ यस्य तादृशे सुपि परे अदन्तस्य अङ्गस्य दीर्घ: भवति । यथा-रामशब्दात् तृतीयाया द्विवचने 'भ्याम्' विभक्तौ 'राम + भ्याम्' इत्यत्र अङ्गसंज्ञायाम् यञादिसुप् = 'भ्याम्' इति तस्मिन् परे अदन्तम् अङ्गम् राम इति तस्य दीर्घे 'रामाभ्याम्' इति रूपं भवति ।)

(ऐसादेशविधिसूत्रम्)

५।१ ६।१ १।१

सूत्र-७७ **अतो भिस ऐस्** ७ । १ । ९

रामै: ।

(अदन्ताद् अङ्गात् परस्य भिस: स्थाने 'ऐस्' आदेश: स्यात् । यथा - 'राम' शब्दात् तृतीयाया बहुवचने 'भिस्' विभक्तौ 'राम + भिस्' इति जाते 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इति सूत्रेण 'राम' इत्यस्य अङ्गसंज्ञायाम् 'अतो भिस ऐस्' इति सूत्रेण 'भिस् प्रत्ययस्य स्थाने' ऐस् इति आदेशे 'राम + ऐस्' इति जाते 'वृद्धि रेचि' इति सूत्रेण वृद्धौ 'रामैस्' इति जाते सकारस्य रुत्वे विसर्गे च 'रामै:' इति रूपं भवति ।)

## अभ्यासः

१. 'अ इ उ ऋ लृ' वर्णेभ्यः 'अम्' परे पूर्वपरयोः स्थाने पूर्वरूपं भवति।

यथा - अ + अम् = अम्, राम + अम् = रामम्।

आ + अम् = आम्, विश्वपा + अम् = विश्वपाम्।

इ + अम् = इम्, हरि + अम् = हरिम्।

ई + अम् = ईम्, गौरी + अम् = गौरीम्।

उ + अम् = उम्, गुरु + अम् = गुरुम् इत्यादि।

२. तद्धितप्रत्ययभिन्नानां ल, श, क, ख, ग, घ, ङ वर्णानाम् इत्संज्ञा 'लशक्वतद्धिते' इति सूत्रेण भवति। तथा च - शस्, ङे, ङसि, ङस्, ङि इत्यत्र शकारङकारयोः इत्संज्ञा भवति, इत्संज्ञायाः फलं 'तस्य लोपः' 'इति सूत्रेण लोपः।

३. रकारात् षकारात् च परस्य नकारस्य णत्वं भवति स्वरवर्णैः कवर्ग - पवर्ग - 'य व ह आ न' वर्णैः व्यवधानेऽपि समानपदे। यथा - कराणाम्, मूर्खेण, गर्वेण, सूर्येण, गुरुणा इत्यादि।

४. पदस्य अन्ते स्थितस्य नकारस्य णकारः न भवति। यथा - रामान्, हरीन्, गुरून्, इत्यादि।

**प्रयोगसाधनप्रकार :**

रामान् - 'रामशब्दात् प्रातिपदिकाद् द्वितीयाया बहुवचने 'शस्' विभक्तौ शकारस्य 'लशक्वतद्धिते' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'राम + अस्' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे 'रामास्' इति जाते 'तस्माच्छसो नः पुंसि' इति सूत्रेण सकारस्य स्थाने नकारे 'रामान्' इति स्थिते अत्र

'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति सूत्रेण नकारस्य णत्वे प्राप्ते 'पदान्तस्य' इति सूत्रेण तस्य निषेधे 'रामान्' इति रूपं सिद्धम् ।

(द्वितीयाया द्विवचने प्रथमाया द्विवचनवद् 'रामौ' इति भवति)

बालकम् - बालकशब्दात् प्रातिपदिकाद्, द्वितीयाया एकवचने 'अम्' विभक्तौ 'बालक + अम्' इति जाते 'अमि पूर्वः' इति सूत्रेण पूर्वरूपे 'बालकम्' इति रूपं सिद्धम् ।

## अभ्यासार्थ प्रश्नाः

१. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थ लिखत -**

(क) अमि पूर्वः ।

(ख) तस्माच्छसो नः पुंसि ।

(ग) सुपि च ।

२. **शुद्धम् उच्चारयत -**

(क) अट्कुप्वाङ्नुम्व्यवायेऽपि ।

(ख) टाङसिङसामिनात्स्याः ।

(ग) लशक्वतद्धिते

३. **अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत -**

(क) पूर्वरूपविधायकं सूत्रं किम् ?

(ख) 'लशक्वतद्धिते' इति सूत्रेण केषां वर्णानाम् इत्संज्ञा भवति ।

(ग) 'तस्माच्छसो नः पुंसि' इति सूत्रं किं करोति ?

(घ) अट्प्रत्याहारे के के वर्णाः आयान्ति ?

(ङ) 'टाङसिङसामिनात्स्याः' इति सूत्रं कस्य स्थाने किं करोति ?

४. रिक्तस्थानं पूरयत -

(क) 'राम + अम्' इत्यत्र .............. भवति। (पूर्वरूपम्, पूर्वसवर्णदीर्घः)

(ख) 'शस्' प्रत्यये शकारस्य इत्संज्ञा विधायकं ............................ इति सूत्रम्। (लशक्वतद्धिते, चुटू)

(ग) 'राम + इन' इत्यत्र ...................... भवति। (गुणः, वृद्धिः)

(घ) 'रामान्' इत्यत्र णत्वं ...................। (भवति, न भवति)

(ङ) ...................... सुपि च इति सूत्रं प्रवर्तते। (यञादौ सुपि, पदान्ते)

(च) रामशब्दात् प्रातिपदिकात् तृतीयाया बहुवचने .................. विभक्तौ .................. इति सूत्रेण 'ऐस्' आदेशे 'राम + ऐस् इति जाते ...................... सूत्रेण वृद्धौ ................ 'रामैः' इति रूपं सिद्धम्।

५. शुद्धवाक्येषु (√) चिह्नम् अशुद्धेषु च (X) चिह्नं दर्शयत -

(क) 'अमिपूर्वः' इति सूत्रेण पूर्वरूपं भवति। ( )

(ख) 'शस्' प्रत्यये शकारस्य इत्संज्ञा न भवति। ( )

(ग) द्वितीयाया द्विवचने प्रथमाया द्विवचने च 'रामौ' इति रूपं भवति। ( )

(घ) 'बालकेन' इत्यत्र णत्वं प्राप्नोति। ( )

(च) ङकारस्य टकारस्य च 'चुटू' इति सूत्रेण इत्संज्ञा भवति। ( )

६. अधोनिर्दिष्टानां शब्दानां सिद्धिप्रक्रियां दर्शयत।

बालकान्, शुकम्, रामेण, शिवाभ्याम्, कृष्णैः।

७. घोटक, नर, मयूर शब्दानां द्वितीयाया त्रिषु वचनेषु रूपाणि दर्शयत।

८. परस्परं समूहे मेलयत

| अ समूह : | आ समूह : |
|---|---|
| (क) बालकः | (क) पठतः। |
| (ख) अश्वौ | (ख) खादति। |
| (ग) छात्रौ | (ग) क्रीडति। |
| (घ) मूषकः | (घ) धावतः। |
| (ङ) गजः | (ङ) गच्छति। |

९. संस्कृतभाषायाम् अनुवादं कुरुत

(क) बालक दौडन्छ ।

(ख) राम लेख्छ ।

(ग) कृष्ण पढ्छ ।

(घ) चराहरू उड्छन् ।

(ङ) हात्ती जान्छ ।

## विशेष अभ्यास

१. अकारान्त पुँल्लिङ्गी शब्दहरूको रूपसिद्ध गर्ने प्रक्रिया समान भए पनि कतै रूपमा अन्तर आउँछ । जस्तै - 'रामेण' तृतीयाका एकवचनमा हुन्छ भने 'बालक' शब्दबाट 'बालकेन' हुन्छ । किनभने - 'र' तथा 'ष' देखि पर रहेका 'न' का स्थानमा 'ण' हुन्छ, अन्यत्र 'न' नै हुन्छ ।

२. शब्दनिर्माण गरेपछि वाक्यमा प्रयोग पनि गर्दै जानुपर्दछ । वाक्य बनाउँदा केही नियमहरू जान्नु आवश्यक छ ।

(क) संज्ञा शब्दहरूका साथमा प्रथमपुरुषको क्रियापद जोडिन्छ ।

(ख) एकवचन कर्ताका साथमा एकवचन क्रियापद जोडिन्छ, द्विवचन कर्ताका साथमा द्विवचन क्रियापद जोडिन्छ, बहुवचन कर्ताका साथमा बहुवचन क्रियापद जोडिन्छ ।

| जस्तै - | कर्ता | क्रिया |
|---|---|---|
| | रामः | पठति । |
| | बालकौ | पठतः । |
| | घोटकाः | धावन्ति । |

## शब्दार्थ

पूर्वरूपम् = पहिलेका वर्णको जस्तै रूप ।

पुंसि = पुंल्लिङ्गमा ।

व्यवाये = व्यवधान भएमा ।

रामम् = रामलाई ।

बालकम् = बालकलाई ।

रामेण = रामद्वारा (रामले) ।

रामाभ्याम् = दुई रामले (दुई रामद्वारा) ।

रामैः = रामहरूले ।

चतुर्दशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

('य' आदेशविधिसूत्रम्)

६।१ १।१
## सूत्र-७८ ङेर्यः ७।१।९

**अतोऽङ्गात् परस्य ङेर्यादेशः । रामाय । रामाभ्याम् ।**

(ह्रस्वाकारान्ताद् अङ्गात् परस्य 'ङे' इत्यस्य स्थाने 'य' आदेशः स्यात् । यथा - रामशब्दात् प्रातिपदिकात् चतुर्थ्या एकवचने 'ङे' विभक्तौ 'यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्' इति सूत्रेण अङ्गसंज्ञायां ह्रस्वान्तम् अङ्गं 'राम' इति ततः परस्य 'ङे' इत्यस्य स्थाने 'य' आदेशे 'राम + य' इति भवति । अत्र 'सुपि च' इति सूत्रेण दीर्घे 'रामाय' इति रूपं भवति । रामशब्दात् चतुर्थ्या द्विवचने 'भ्याम्' विभक्तौ 'राम + भ्याम्' इति जाते अङ्गसंज्ञायां 'सुपि च' इति सूत्रेण दीर्घे 'रामाभ्याम्' इति भवति ।)

(एत्वविधिसूत्रम्)

७।१ ७।१ १।१
## सूत्र-७९ बहुवचने झल्येत् ७।१।१०३

**झलादौ बहुवचने सुपि अतोऽङ्गस्यैकारः । रामेभ्यः ।**

(झलादौ बहुवचने सुपि परे अदन्तस्य अङ्गस्य एकारः स्यात् । यथा - राम शब्दात् प्रातिपदिकात् चतुर्थ्या बहुवचने 'भ्यस्' विभक्तौ 'राम + भ्यस्' इति जाते अङ्गसंज्ञायां 'बहुवचने झल्येत्' इति सूत्रेण एत्वे 'रामेभ्यस्' इति भवति । सकारस्य रुत्वे विसर्गे 'रामेभ्यः' इति सिद्ध्यति ।)

(चर्त्वविधिसूत्रम्)

० ७।१
## सूत्र-८० नाऽवसाने ८।४।५६

**अवसाने झलां चरो वा स्युः । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ।**

(अवसाने 'झल्' प्रत्याहारस्थवर्णानां स्थाने 'चर्' प्रत्याहारस्था: वर्णा: विकल्पेन स्यु: । यथा - रामशब्दात् प्रातिपदिकात् पञ्चम्या: एकवचने 'ङसि' विभक्तौ अनुबन्धलोपे 'राम + अस्' इत्यत्र 'टाङसिङसामिनात्स्या:' इति सूत्रेण 'आत्' आदेशे 'राम + आत्' इति जाते सवर्णदीर्घे 'रामात्' इत्यत्र 'झलां जशोऽन्ते' इति सूत्रेण जश्त्वे 'रामाद्' इति जाते 'वाऽवसाने' इति सूत्रेण वैकल्पिके चर्त्वे दकारस्य स्थाने तकारे 'रामात्' इति भवति । चर्त्वाभावे 'रामाद्' इत्यपि भवति ।

पञ्चम्या: द्विवचने 'भ्याम्' विभक्तौ 'सुपि च' इति सूत्रेण दीर्घे 'रामाभ्याम्' इति भवति । पञ्चम्या: बहुवचने 'भ्यस्' विभक्तौ 'बहुवचने झल्येत्' इति सूत्रेण एत्वे सकारस्य रुत्वे विसर्गे 'रामेभ्य:' इति भवति । षष्ठ्या: एकवचने 'ङस्' विभक्तौ अनुबन्धलोपे 'टाङसिङसामिनात्स्या:' इति सूत्रेण 'स्य' आदेशे 'रामस्य' इति भवति ।)

### (एत्वविधिसूत्रम्)

सूत्र-८१ **ओसि च ७ । ३ । १०४**

**अतोऽङ्गस्यैकार: । रामयो: ।**

(अदन्तस्य अङ्गस्य एकार: स्याद् ओसि परे । यथा - 'राम' शब्दात् प्रातिपदिकात् षष्ठ्या: द्विवचने 'ओस्' विभक्तौ 'राम + ओस्' इति जाते अङ्गसंज्ञायाम् 'ओसि च' इति सूत्रेण एत्वे 'रामे + ओस्' इति जाते 'एचोऽयवायाव:' इति सूत्रेण एकारस्य स्थाने 'अय्' आदेशे वर्णसम्मेलने सकारस्य रुत्वे विसर्गे' रामयो:' इति भवति ।)

(नुडागमविधिसूत्रम्)

सूत्र-८२ ह्रस्वनद्यापो नुट् ७ । १ । ५४

**ह्रस्वान्ताद् नद्यन्ताद् आबन्ताच्चाङ्गात् परस्यामो नुडागमः ।**

(ह्रस्वान्ताद् अङ्गात्, नद्यन्ताद् अङ्गात्, आबन्ताद् अङ्गात् परस्य आम् प्रत्ययस्य 'नुड्' आगमः स्यात् । 'नुट्' इत्यत्र टकारस्य इत्संज्ञा, उकारस्य च इत्संज्ञायां लोपे 'न्' अवशिष्टः भवति । यथा - 'राम' शब्दात् प्रातिपदिकात् षष्ठ्या बहुवचने 'आम्' विभक्तौ अङ्गसंज्ञायां ह्रस्वान्तम् अङ्गं 'राम' इति ततः परस्य 'आम्' विभक्तेः नुडागमे अनुबन्धलोपे वर्णसम्मेलने 'राम + नाम्' इति भवति ।

(दीर्घविधिसूत्रम्)

सूत्र-८३ नामि ६ । ४ । ३

**अजन्ताङ्गस्य दीर्घः नामि । रामाणाम् । रामे । रामयोः ।**

(अजन्तस्य अङ्गस्य दीर्घः स्याद् नामि परे । यथा - 'राम + नाम्' इत्यत्र 'नामि' इति सूत्रेण दीर्घे 'रामानाम्' इति भवति । 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति सूत्रेण णत्वे 'रामाणाम्' इति रूपं सिद्ध्यति ।)

सप्तम्या एकवचने 'ङि' विभक्तौ 'राम + ङि' इति जाते 'लशक्वतद्धिते' इति सूत्रेण ङकारस्य इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'राम + इ' इति जाते 'आद् गुणः' इति सूत्रेण गुणे 'रामे' इति भवति । सप्तम्या द्विवचने 'ओस्' विभक्तौ षष्ठीद्विवचनवद् 'रामयोः' इति भवति ।)

(षत्वविधिसूत्रम्)

६।२
सूत्र-८४ आदेशप्रत्यययोः ८ । ३ । ५९

**इण्कुभ्यां परस्यापदान्तस्य आदेशः प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ।**

('इण्' प्रत्याहारस्थवर्णेभ्यः, 'क ख ग घ ङ' वर्णेभ्यश्च परस्य आदेशरूपस्य सकारस्य, प्रत्ययावयवस्य च सकारस्य स्थाने मूर्धन्यः षकारः स्यात् । यथा - रामशब्दात् प्रातिपदिकात् सप्तम्याः बहुवचने 'सुप्' प्रत्यये पकारस्य 'हलन्त्यम्' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'बहुवचने झल्येत्' इति सूत्रेण अकारस्य एत्वे 'रामे + सु' इति जाते 'आदेशप्रत्यययोः' इति सूत्रेण सकारस्य स्थाने षत्वे 'रामेषु' इति रूपं भवति ।)

## अभ्यासः

१. **ह्रस्वाकारान्ताद् अङ्गात् परस्य 'ङे' इत्यस्य स्थाने 'य' भवति 'य' आदेशे कृते 'सुपि च' इति सूत्रेण दीर्घः भवति ।**

यथा - बालक + ङे = बालक + य, दीर्घे बालकाय ।
अश्व + ङे = अश्व + य, दीर्घे अश्वाय ।
नृप + ङे = नृप + य, दीर्घे नृपाय ।
सूर्य + ङे = सूर्य + य, दीर्घे सूर्याय इत्यादि ।

२. **ह्रस्वाकारान्ताद् अङ्गाद् झलादिबहुवचने सुपि परे अकारस्य स्थाने 'एकारः' भवति ।**

यथा - 'बालक + भ्यस्' एत्वे 'बालके + भ्यस्' रुत्वे विसर्गे बालकेभ्यः ।
खग + भ्यस् एत्वे खगे + भ्यस् रुत्वे विसर्गे खगेभ्यः ।
शुक + भ्यस्, एत्वे शुके + भ्यस् रुत्वे विसर्गे शुकेभ्यः ।

नर + भ्यस्, एत्वे नरे + भ्यस्, रुत्वे विसर्गे नरेभ्यः ।

वानर + सुप् एत्वे वानरे + सु षत्वे वानरेषु इत्यादि ।

३. **ह्रस्वान्ताद् अङ्गात् परस्य 'आम्' प्रत्ययस्य 'नुड्' आगमः भवति । अजन्तस्य अङ्गस्य दीर्घः भवति, नामि परे ।**

यथा - बालक + आम्, नुट् बालक + नाम्, दीर्घे बालकानाम् ।

छात्र + आम्, नुट् छात्र + नाम्, दीर्घे, णत्वे छात्राणाम् ।

मूषक + आम्, नुट् मूषक + नाम्, दीर्घे, णत्वे मूषकाणाम् ।

खग + आम्, नुट् खग + नाम्, दीर्घे खगानाम् ।

मयूर + आम्, नुट् मयूर + नाम्, दीर्घे, णत्वे मयूराणाम् इत्यादि ।

**प्रयोगसाधनप्रकारः**

**रामस्य** - रामशब्दात् प्रातिपदिकात् षष्ठ्या एकवचने 'ङस्' विभक्तौ अनुबन्धलोपे 'टाङसिङसामिनात्स्याः' इति सूत्रेण 'अस्' इत्यस्य स्थाने 'स्य' आदेशे रामस्य इति रूपं सिद्धम् ।

**रामाणाम्** - रामशब्दात् प्रातिपदिकात् षष्ठ्याः बहुवचने 'आम्' प्रत्यये 'राम + आम्' इति जाते अङ्गसंज्ञायाम् 'ह्रस्वनद्यापो नुट्' इति सूत्रेण 'नुड्' आगमे अनुबन्धलोपे 'राम + नाम्' इति जाते 'नामि' इति सूत्रेण दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति सूत्रेण णत्वे 'रामाणाम्' इति रूपं सिद्धम् ।

## अभ्यासार्थं प्रश्नाः

१. **अधोलिखितानां प्रश्नानाम् उत्तराणि दत्त -**

(क) 'ङेर्यः' इति सूत्रं किं करोति ?

(ख) 'राम + य' इत्यत्र दीर्घविधायकं सूत्रं किम् ?

(ग) नुडागमः कस्य भवति ?

(घ) 'बहुवचने झल्येत्' इति सूत्रं कुत्र प्रवर्तते ?

(ङ) 'नामि' इति सूत्रं किं करोति ?

(च) मूर्धन्यादेशविधायकं सूत्रं किम् ?

२. अधोनिर्दिष्टानां सूत्राणाम् अर्थं नेपालीभाषायां लिखत

(क) ओसि च ।

(ख) बहुवचने झल्येत् ।

(ग) नामि ।

(घ) आदेशप्रत्यययोः ।

३. रिक्तस्थानं पूरयत-

(क) अवसानसंज्ञाविधायकं .......... इति सूत्रम् । (विरामोऽवसानम्, वाऽवसाने)

(ख) 'राम + ङस्' इत्यत्र 'स्य' आदेशविधायकं .................... इति सूत्रम् । (टाङसिङसामिनात्स्याः, अट्कुप्वाङ्नुम्व्यवायेऽपि)

(ग) 'ह्रस्वनद्यापो नुट्' इति सूत्रेण ............... भवति । (नुडागमः, दीर्घः)

(घ) 'राम + ओस्' इत्यत्र ......... इति सूत्रेण एत्वं भवति (ओसि च, सुपि च)

(ङ) 'राम + आम्' इति स्थिते ................................ इति सूत्रेण नुडागमे अनुबन्धलोपे ......................... इति सूत्रेण दीर्घे ...................... इति सूत्रेण णत्वे ...................... इति रूपं भवति ।

४. अधोलिखितेषु शुद्धवाक्येषु (√) चिह्नम् अशुद्धेषु च (x) चिह्नं निर्दिशत-

(क) 'राम + ङे' इत्यत्र 'ङेर्यः' इति सूत्रेण 'य' आदेशः भवति । ( )

(ख) 'रामेभ्यः' इति चतुर्थीबहुवचने पञ्चमीबहुवचने च भवति । ( )

(ग) 'रामेषु' इत्यत्र 'बहुवचने झल्येत्' इति सूत्रं प्रवर्तते । ( )

(घ) 'आदेशप्रत्यययोः' इति सूत्रं मूर्धन्यादेशविधायकम् । ( )

(ङ) 'रामे + ओस्' इत्यत्र अयादिसन्धिर्भवति । ( )

(च) षष्ठ्याः द्विवचने सप्तम्याः द्विवचने च तुल्यं रूपं भवति । ( )

(छ) अदन्तपदेन ह्रस्वाकारान्तस्य ग्रहणं भवति । ( )

**५. अधोलिखितानां प्रयोगाणां सिद्धिप्रक्रियां दर्शयत -**

बालकस्य, शुकात्, वानराय, मनुष्येभ्यः वृक्षेषु ।

**६. शिव, सूर्य, खग, अश्व शब्दानां षष्ठीविभक्तेः रूपाणि दर्शयत ।**

**७. परस्परं समूहे मेलयत-**

| अ समूह : | आ समूह : |
|---|---|
| (क) वाऽवसाने | (क) एत्वविधायकम् |
| (ख) बहुवचने झल्येत् | (ख) षत्वविधायकम् |
| (ग) आदेशप्रत्यययोः | (ग) चर्त्वविधायकम् |
| (घ) ह्रस्वनद्यापो नुट् | (घ) दीर्घविधायकम् |
| (ङ) नामि | (ङ) नुडागमविधायकम् |

**८. नेपालीभाषायाम् अनुवादं कुरुत -**

(क) शुकाः वदन्ति ।

(ख) गजः तिष्ठति ।

(ग) छात्रौ पठतः ।

(घ) अजः गच्छति ।

(ङ) बालकाः हसन्ति ।

(च) मयूराः नृत्यन्ति ।

## विशेष अभ्यास

| १. राम शब्दका सात विभक्ति र सम्बोधनका रूप | | | |
|---|---|---|---|
| विभक्ति | एकवचन | द्विवचन | बहुवचन |
| प्रथमा | रामः | रामौ | रामाः |
| द्वितीया | रामम् | रामौ | रामान् |
| तृतीया | रामेण | रामाभ्याम् | रामैः |
| चतुर्थी | रामाय | रामाभ्याम् | रामेभ्यः |
| पञ्चमी | रामात्-रामाद् | रामाभ्याम् | रामेभ्यः |
| षष्ठी | रामस्य | रामयोः | रामाणाम् |
| सप्तमी | रामे | रामयोः | रामेषु |
| सम्बोधन | हे राम | हे रामौ | हे रामाः |

'राम' शब्दजस्तै रूप हुने अरू शब्दहरू

खगः = चरो, अनलः = आगो, गजः = हात्ती, बकः = बकुल्लो, वानरः = बाँदर, अश्वः = घोडा, सर्पः = सर्प, वृषभः = गोरु, देवः = देउता, पिकः = कोइली, नृपः = राजा, करः = हात, खलः = दुष्ट, नक्रः = गोही ।

पञ्चदशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

(सर्वनामसंज्ञासूत्रम्)

[१।३] [१।३]

सूत्र-८५ **सर्वादीनि सर्वनामानि १।१।२७**

**सर्वादिगणे पठितानां शब्दानां सर्वनामसंज्ञा स्यात् ।**

सर्वादिगणे पठिताः शब्दा यथा - सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवत्, किम् । एतेषां सर्वनामसंज्ञा भवति ।

सर्वशब्दरूपसिद्धिप्रक्रिया -

सर्वशब्दस्य सामान्यतः रामशब्दवद् रूपाणि भवन्ति । जस्, ङे, ङसि, आम्, ङि विभक्तिषु भिन्नानि रूपाणि भवन्ति । यथा - सर्वशब्दात् प्रातिपदिकात् प्रथमाया एकवचने 'सु' विभक्तौ अनुबन्धलोपे 'सर्व + स्' इति जाते सकारस्य रुत्वे विसर्गे 'सर्वः' इति भवति । एवम् सर्वशब्दात् प्रातिपदिकात् प्रथमाया द्विवचने 'औ' विभक्तौ 'सर्व + औ' इत्यत्र 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते 'नादिचि' इति सूत्रेण निषेधे 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'सर्वौ' इति भवति ।)

('शी' आदेशविधिसूत्रम्)

[६।१] [१।१]

सूत्र-८६ **जसः शी ७।१।१७**

**अदन्तात् सर्वनाम्नो 'जसः' शी स्यात् । सर्वे ।**

(ह्रस्वाकारान्तात् सर्वनामसंज्ञकाद् विहितस्य जस् प्रत्ययस्य स्थाने 'शी' आदेशः स्यात् । यथा - सर्वशब्दात् प्रातिपदिकात् प्रथमायाः बहुवचने जस् विभक्तौ अनुबन्धलोपे 'सर्व + अस्' इत्यत्र 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वनामसंज्ञायां 'जसः शी' इति सूत्रेण 'शी' आदेशे शकारस्य 'लशक्वतद्धिते'

इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'सर्व + ई' इति जाते 'आद् गुणः' इति सूत्रेण गुणे 'सर्वे' इति रूपं भवति । द्वितीयाविभक्तौ राम शब्दवत्- सर्वम्, सर्वौ सर्वान्, तृतीयायां - सर्वेण सर्वाभ्याम् सर्वैः इति रूपाणि भवन्ति ।)

### (स्मै आदेशविधिसूत्रम्)

**सूत्र-८७ सर्वनाम्नः[५।१] स्मै[१।१] ७ । १ । १४**

**अतः सर्वनाम्नो ङे स्मै । सर्वस्मै ।**

(ह्रस्वाकारान्तात् सर्वनामसंज्ञकात् परस्य 'ङे' इत्यस्य स्थाने 'स्मै' आदेशः स्यात् । यथा - सर्वशब्दात् चतुर्थ्या एकवचने 'ङे' विभक्तौ अनुबन्धलोपे 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वनामसंज्ञायां 'सर्वनाम्नः स्मै' इति सूत्रेण 'स्मै' आदेशे 'सर्वस्मै' इति रूपं भवति । चतुर्थ्या द्विवचने बहुवचने च सर्वाभ्याम्, सर्वेभ्यः इति भवतः ।)

### (स्मात् - स्मिनादेशसूत्रम्)

**सूत्र-८८ ङसिङ्योः[६।२] स्मात्स्मिनौ[१।२] ७ । १ । १५**

**अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ।**

(ह्रस्वाकारान्तात् सर्वनामसंज्ञकात् परस्य 'ङसि' इत्यस्य स्थाने 'स्मात्' आदेशः, 'ङि' इत्यस्य स्थाने 'स्मिन्' आदेशश्च स्यात् । यथा - सर्वशब्दात् प्रातिपदिकात् पञ्चम्या एकवचने 'ङसि' विभक्तौ अनुबन्धलोपे सर्वनामसंज्ञायां 'ङसिङ्योः स्मात्स्मिनौ' इति सूत्रेण 'स्मात्' आदेशे 'सर्वस्मात्' इति भवति । पञ्चमीद्विवचने सर्वाभ्याम्, पञ्चमीबहुवचने 'सर्वेभ्यः' इति भवति । षष्ठ्या एकवचने 'सर्वस्य' इति, षष्ठ्या द्विवचने 'सर्वयोः' इति भवति ।)

(सुडागमविधिसूत्रम्)

सूत्र-८९ आमि सर्वनाम्नः सुट् ७।१।५२

**अवर्णान्तात् परस्य सर्वनाम्नो विहितस्यामः सुडागमः ।** एत्वषत्वे - सर्वेषाम् सर्वस्मिन् ।

(अवर्णान्तात् परस्य सर्वनामसंज्ञकाद् विहितस्य 'आम्' प्रत्ययस्य सुडागमः स्यात् । 'सुट्' इत्यत्र टकारस्य उकारस्य च इत्संज्ञायां लोपे च 'स्' अवशिष्टः भवति । यथा - सर्वनामसंज्ञकात् सर्वशब्दात् षष्ठ्याः बहुवचने 'आम्' विभक्तौ 'आमि सर्वनाम्नः सुट्' इति सूत्रेण 'सुडागमे- अनुबन्धलोपे 'सर्व + स् आम्' इति जाते 'बहुवचने झल्येत्' इति सूत्रेण एत्वे 'आदेशप्रत्यययोः' इति सूत्रेण षत्वे वर्णसम्मेलने 'सर्वेषाम्' इति भवति ।

सप्तम्या एकवचने 'ङि' विभक्तौ अनुबन्धलोपे सर्वनामसंज्ञायां 'ङसिङ्योः स्मात्स्मिनौ' इति सूत्रेण 'स्मिन् इति आदेशे 'सर्वस्मिन्' इति भवति । सप्तम्या द्विवचने 'सर्वयोः' इति, सप्तम्या बहुवचने 'सर्वेषु' इति भवति ।)

## अभ्यासः

१. **सर्वशब्दे सर्वनामसंज्ञा प्रयुक्तं कार्यं पञ्चसु विभक्तिषु भवति यथा -**

| जस् | ङे | ङसि | आम् | ङि | विभक्तयः |
|---|---|---|---|---|---|
| शी (ई) | स्मै | स्मात् | सुट् (स्) | स्मिन् | आदेशाः |
| सर्वे | सर्वस्मै | सर्वस्मात् | सर्वेषाम् | सर्वस्मिन् | रूपाणि |

अन्यत्र रामशब्दवत् सर्वशब्दस्य रूपाणि भवन्ति ।

२. सर्वशब्दस्य सप्तसु विभक्तिषु निष्पन्नानि रूपाणि तालिकायां प्रदर्शितानि सन्ति ।

यथा-

| विभक्तिः | एकचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सर्वः | सर्वौ | सर्वे |
| द्वितीया | सर्वम् | सर्वौ | सर्वान् |
| तृतीया | सर्वेण | सर्वाभ्याम् | सर्वैः |
| चतुर्थी | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः |
| पञ्चमी | सर्वस्मात् | सर्वाभ्याम् | सर्वेभ्यः |
| षष्ठी | सर्वस्य | सर्वयोः | सर्वेषाम् |
| सप्तमी | सर्वस्मिन् | सर्वयोः | सर्वेषु |

३. प्रयोगसिद्धिप्रक्रिया

**सर्वे**- सर्वशब्दात् प्रातिपदिकात् प्रथमायाः बहुवचने 'जस्' विभक्तौ अनुबन्धलोपे 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वनामसंज्ञायां 'जसःशी' इति सूत्रेण 'शी' आदेशे शकारस्य 'लशक्वतद्धिते' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति सूत्रेण लोपे 'सर्व + ई' इति जाते 'आद् गुणः' इति सूत्रेण गुणे 'सर्वे' इति रूपं सिद्धम् ।

४. सर्वशब्दवद् विश्वशब्दस्य रूपाणि भवन्ति ।

## अभ्यासार्थ प्रश्नाः

१. अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत-

(क) सर्वनामसंज्ञाविधायकं सूत्रं किम् ?

(ख) 'जसः शी' इति सूत्रं कुत्र प्रवर्तते ?

(ग) 'सर्वनाम्नः स्मै' इति सूत्रेण कस्य स्थाने 'स्मै' भवति ?

(घ) 'ङसिङ्योः स्मात्स्मिनौ' इति सूत्रेण कस्य स्थाने किं भवति ?

(ङ) 'सर्व + ओस्' इत्यत्र केन सूत्रेण किं भवति ?

(च) 'सुडागमे' कस्य केन इत्संज्ञा भवति ?

(छ) 'सर्वेषु' इत्यत्र एत्वविधायकं सूत्रं किम् ?

२. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थ लिखत -**

(क) सर्वादीनि सर्वनामानि ।

(ख) सर्वनाम्नः स्मै ।

(ग) आमि सर्वनाम्नः सुट् ।

३. **अधो निर्दिष्टानां प्रयोगाणां सिद्धिप्रक्रियां दर्शयत-**

सर्वौ, सर्वस्मै, सर्वेषाम्, सर्वस्मिन् ।

४. **रिक्तस्थानं पूरयत**

(क) 'सर्वनाम्नः स्मै' इति सूत्रेण .......... इत्यस्य स्थाने 'स्मै' भवति । (ङे, ङसि)

(ख) 'जसः शी' इति सूत्रं ............... आदेशविधायकम् । (शी, स्मिन्)

(ग) सर्वशब्दस्य सर्वनामसंज्ञाविधायकं सूत्रम् ....................................... ।
(सर्वादीनि सर्वनामानि, आमि सर्वनाम्नः सुट्)

(घ) 'सर्व + आम्' इत्यत्र .......................... सूत्रेण 'सुट्' भवति ।
(सर्वादीनि सर्वनामानि, आमि सर्वनाम्नः सुट्)

(ङ) सर्वशब्दस्य प्रथमाया द्विवचने .................. इति रूपं भवति । (सर्वौ, सर्वे)

(च) सर्वशब्दात् प्रातिपदिकात् ............... इति सूत्रेण सर्वनामसंज्ञायां पञ्चम्या एकवचने ङसि विभक्तौ ...................... इति सूत्रेण 'स्मात्' आदेशे 'सर्वस्मात्' इति भवति ।

५. अधोलिखितेषु शुद्धवाक्येषु (√) चिह्नं दर्शयत

(क) सर्वशब्दस्य सर्वनामसंज्ञा भवति । ( )

(ख) सर्वशब्दस्य प्रथमाया एकवचने द्विवचने च रामशब्दवद् रूपे भवतः । ( )

(ग) प्रथमाया बहुवचने 'सर्वाः' इति रूपं भवति । ( )

(घ) चतुर्थ्या एकवचने रामशब्दस्य सर्वशब्दस्य च रूपं तुल्यं भवति । ( )

(ङ) 'सर्वस्य' इत्यत्र 'टाङसिङसामिनात्स्याः' इति प्रवर्तते । ( )

(च) 'सर्व + भ्यस्' इत्यत्र एत्वं भवति । ( )

६. 'विश्व' शब्दस्य प्रथमाविभक्तेः रूपाणि लिखत ।

७. परस्परं समूहे मेलयत–

| अ समूहः | आ समूहः |
|---|---|
| (क) रामः | (क) गच्छन्ति । |
| (ख) सर्वे | (ख) पठति । |
| (ग) शुकौ | (ग) खादन्ति । |
| (घ) मनुष्यः | (घ) वदतः । |
| (ङ) वानराः | (ङ) हसति । |

## विशेष अभ्यास

१. सर्वनाम शब्दको प्रयोग संज्ञा शब्दका ठाउँमा गरिन्छ । संज्ञा शब्दको विशेषणका रूपमा पनि सर्वनाम शब्दको प्रयोग गरिन्छ ।

जस्तै - रामः गच्छति, सः गच्छति ।

छात्राः पठन्ति सर्वे छात्राः पठन्ति । इत्यादि ।

२. अकारान्त पुंल्लिङ्गी शब्दहरूको रूप राम शब्द जस्तै हुने भए पनि सर्वादिगणमा पढेका शब्दहरूको सर्वनाम संज्ञा हुन्छ र सर्वनाम संज्ञाको फल हो 'जस्' का स्थानमा 'शी' हुनु, 'ङे'का ठाउँमा 'स्मै' हुनु, 'ङसि' का ठाउँमा 'स्मात्' हुनु, 'आम्' लाई 'सुट्' आगम हुनु र 'ङि' का स्थानमा 'स्मिन्' आदेश हुनु । यसरी प्रथमा बहुवचन, चतुर्थी एकवचन, पञ्चमी एकवचन, षष्ठी बहुवचन र सप्तमीका एकवचनमा रूप फरक हुन्छ ।

## शब्दार्थ

सर्व = सबै
विश्व = संसार
उभ = दुइ
उभय = दुइको समूह
अन्य = अर्को
अन्यतर = दुइमध्ये कुनै एक
इतर = अर्को (भिन्नै)
त्व = अर्को
नेम = आधा
सम = सबै
सिम = सबै
पूर्व = पहिलो
पर = अर्को (दोस्रो)
अवर = पश्चिम (दिशा)
अधर = तल्लो
दक्षिण = दक्षिण (दिशा)
अपर = पश्चिम (अर्को)
स्वम् = आफू, आफ्ना आफन्त, बन्धु, धन
उत्तर = उत्तर (दिशा)
अन्तर = बाहिरको
त्यद् = त्यो
तद् = त्यो
यद् = जो (जुन)
एतद् = यो
इदम् = यो
एक = एक
द्वि = दुइ
युष्मद् = तिमी

षोडशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

## (आकारान्तपुंल्लिङ्गशब्दनिरूपणम्)

विश्वपा :- 'विश्वपा' शब्दात् प्रथमाया एकवचने 'सु'-विभक्तौ उकारस्य इत्संज्ञायां लोपे च 'विश्वपा + स्' इति जाते सकारस्य रुत्वे विसर्गे 'विश्वपाः' इति सिद्ध्यति ।

## (पूर्वसवर्णदीर्घनिषेधकं सूत्रम्)

सूत्र-९० **दीर्घाज्जसि च ६ । १ । १०५**

**दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः ।**

(दीर्घाद् 'जस्' प्रत्यये परे 'इच्' प्रत्याहारस्थेषु च वर्णेषु परतः पूर्वसवर्णदीर्घः न भवति । यथा - 'विश्वपा' शब्दात् प्रथमाया द्विवचने 'औ' विभक्तौ 'विश्वपा + औ' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते 'दीर्घाज्जसि च' इति सूत्रेण पूर्वसवर्णदीर्घस्य निषेधे 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'विश्वपौ' इति भवति । एवम् - प्रथमाया बहुवचने 'जस्' विभक्तौ जकारस्य इत्संज्ञायां लोपे च कृते 'विश्वपा + अस्' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते 'दीर्घाज्जसि च' इति सूत्रेण निषेधे 'अकः सवर्णे दीर्घः' इति सूत्रेण सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'विश्वपाः' इति भवति ।

सम्बोधने 'विश्वपा' शब्दात् प्रथमाया एकवचने 'सु' विभक्तौ सकारस्य रुत्वे विसर्गे हे विश्वपाः इति भवति । द्विवचने बहुवचने चहे विश्वपौ, हे विश्वपाः इति प्रथमावत् । द्वितीयाया एकवचने 'अम्' विभक्तौ 'विश्वपा +

अम्' इति स्थिते 'अमि पूर्वः' इति सूत्रेण पूर्वरूपे 'विश्वपाम्' इति भवति । द्वितीयाया द्विवचने प्रथमाया द्विवचनवद् 'विश्वपौ' इति भवति ।)

(सर्वनामस्थानसंज्ञासूत्रम्)

सूत्र-९१ **सुडनपुंसकस्य** [१।१] [६।१] १ । १ । ४३

**स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ।**

(नपुंसकलिङ्गं विहाय अन्यत्र (पुंल्लिङ्गे स्त्रीलिङ्गे वा) स्थितानां 'सु औ जस्, अम् औट्' प्रत्ययानां सर्वनामस्थानसंज्ञा भवति ।)

(पदसंज्ञासूत्रम्)

सूत्र-९२ **स्वादिष्वसर्वनामस्थाने** [७।३] [७।१] १ । ४ । १७

**कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ।**

(सु औ जस् अम् औट् प्रत्ययातिरिक्तेषु स्वादिप्रत्ययेषु परतः पूर्वस्य शब्द-समुदायस्य पदसंज्ञा भवति ।)

(भसंज्ञासूत्रम्)

सूत्र-९३ **यचि भम्** [७।१] [१।१] १ । ४ । १८

**यादिषु अजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ।**

(सर्वनामस्थानभिन्नेषु (**'सु औ जस् अम् औट्'** प्रत्ययभिन्नेषु) यकारादि - अजादिस्वादिप्रत्ययेषु परतः पूर्वस्य शब्दसमुदायस्य भसंज्ञा भवति । तथा च-सर्वनामस्थानभिन्नेषु अजादिषु (**शस्, टा, ङे, ङसि, ङस्, आम्, ङि**) प्रत्ययेषु परतः पूर्वस्य भसंज्ञा भवति । सर्वनामस्थानभिन्नेषु हलादिषु (**भ्याम्,**

भिस्, भ्यस्, सुप्) प्रत्ययेषु परतः पूर्वस्य 'स्वादिष्वसर्वनामस्थाने' इति सूत्रेण पदसंज्ञा भवति ।)

(भसंज्ञकाङ्गलोपविधिसूत्रम्)

६।१ ६।१

सूत्र-९४ **आतो धातोः ६ । ४ । १४०**

**आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः ।**

(आकारान्तो यो धातुः स अन्ते यस्य तादृशस्य भसंज्ञकस्य अन्त्यवर्णस्य लोपः स्यात् ।

यथा – विश्वपाशब्दात् प्रातिपदिकाद् द्वितीयाया बहुवचने 'शस्' विभक्तौ शाकारस्य इत्संज्ञायां लोपे च कृते 'विश्वपा + अस्' इति जाते 'यचि भम्' इति सूत्रेण 'विश्वपा' इत्यस्य भसंज्ञायां 'यस्मात् प्रत्यय'- इत्यादिसूत्रेण अङ्गसंज्ञायाम्, आकारान्तो धातुः 'पा' इति तदन्तं भसंज्ञकम् अङ्गं 'विश्वपा' इति तस्यान्तस्य आकारस्य 'आतो धातोः' इति सूत्रेण लोपे 'विश्वप् + अस्' इति जाते वर्णसम्मेलने सकास्य रुत्वे विसर्गे च 'विश्वपः' इति भवति ।

तृतीयाया एकवचने 'विश्वपा + टा' इत्यत्र अनुबन्धलोपे भसंज्ञायाम् आकारलोपे वर्णसम्मेलने 'विश्वपा' इति, तृतीयाया द्विवचने विश्वपाभ्याम्, बहुवचने विश्वपाभिः, इति भवति । चतुर्थ्या एकवचने 'ङे' विभक्तौ अनुबन्धलोपे भसंज्ञायाम् आकारलोपे वर्णसम्मेलने 'विश्वपे' इति, द्विवचने विश्वपाभ्याम्, बहुवचने 'विश्वपाभ्यः' इति । पञ्चम्या एकवचने 'ङसि' विभक्तौ अनुबन्धलोपे भसंज्ञायाम् आकारलोपे सकारस्य रुत्वे विसर्गे विश्वपः इति, द्विवचने विश्वपाभ्याम्, बहुवचने विश्वपाभ्यः इति । षष्ठ्या एकवचने 'ङस्' विभक्तौ अनुबन्धलोपे भसंज्ञायाम् आकारलोपे सकारस्य रुत्वे विसर्गे 'विश्वपः' इति भवति, द्विवचने 'ओस्' विभक्तौ भसंज्ञायाम् आकार लोपे सकारस्य रुत्वेविसर्गे वर्णसम्मेलने च 'विश्वपोः' इति, बहुवचने 'आम्'

विभक्तौ भसंज्ञायाम् आकारलोपे' विश्वपाम्' इति भवति । सप्तम्या एकवचने ङि विभक्तौ अनुबन्धलोपे भसंज्ञायाम् आकारलोपे वर्णसम्मेलने 'विश्वपि' इति, सप्तम्या द्विवचने षष्ठीद्विवचनवद् 'विश्वपोः' इति, सप्तम्या बहुवचने सुप् विभक्तौ अनुबन्धलोपे 'विश्वपासु' इति भवति ।)

## अभ्यासः

१. **'सुट्' पदेन 'सु औ जस् अम् औट्' प्रत्ययानां ग्रहणं भवति ।**

२. **स्वादिष्वसर्वनामस्थाने, यचि भम् इति सूत्रयोः युगपत् प्राप्तौ परत्वाद् भसंज्ञा भवति । एवञ्च - सर्वनामस्थानभिन्नेषु यकारादि अजादिप्रत्ययेषु परतः पूर्वस्य भसंज्ञा भवति, सर्वनामस्थानभिन्नेषु हलादिप्रत्ययेषु परतः पूर्वस्य पदसंज्ञा भवति ।**

३. **'आतो धातोः' इति सूत्रेण धातोः अवयवस्य आकारस्य लोपो भवति ।**

४. **रूपसिद्धिप्रकारः**

(क) **विश्वपः**- विश्वपाशब्दात् प्रातिपदिकाद् द्वितीयाया बहुवचने 'शस्' विभक्तौ अनुबन्धलोपे 'विश्वपा + अस्' इति जाते 'यचि भम्' इति सूत्रेण भसंज्ञायाम् 'आतो धातोः' इति सूत्रेण आकारलोपे वर्णसम्मेलने सकारस्य रुत्वे विसर्गे च 'विश्वपः' इति रूपं सिद्धम् ।

(ख) **विश्वपाम्** - विश्वपाशब्दात् प्रातिपदिकात् षष्ठ्या बहुवचने 'आम्' विभक्तौ 'विश्वपा + आम्' इति जाते भसंज्ञायाम् 'आतो धातोः' इति सूत्रेण आकारलोपे वर्णसम्मेलने विश्वपाम्' इति भवति ।

५. विश्वपाशब्दस्य सर्वासु विभक्तिषु रूपाणि –

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | विश्वपाः | विश्वपौ | विश्वपाः |
| द्वितीया | विश्वपाम् | विश्वपौ | विश्वपः |
| तृतीया | विश्वपा | विश्वपाभ्याम् | विश्वपाभिः |
| चतुर्थी | विश्वपे | विश्वपाभ्याम् | विश्वपाभ्यः |
| पञ्चमी | विश्वपः | विश्वपाभ्याम् | विश्वपाभ्यः |
| षष्ठी | विश्वपः | विश्वपोः | विश्वपाम् |
| सप्तमी | विश्वपि | विश्वपोः | विश्वपासु |
| सम्बोधनम् | हे विश्वपाः | हे विश्वपौ | हे विश्वपाः |

## अभ्यासार्थ प्रश्नाः

१. **अधोलिखितानां प्रश्नानाम् उत्तराणि दत्त–**

(क) 'दीर्घाज्जसि च' इति सूत्रं किं करोति ?

(ख) सर्वनामस्थानसंज्ञा केन सूत्रेण भवति ?

(ग) भसंज्ञकं सूत्रं किम् ?

(घ) 'सुट्' पदेन केषां प्रत्ययानां ग्रहणं भवति ।

२. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थं लिखत –**

(क) यचि भम् ।

(ख) स्वादिष्वसर्वनामस्थाने ।

(ग) आतो धातोः ।

३. रिक्तस्थानं पूरयत

(क) ................................................ प्रत्ययानां सर्वनामस्थानसंज्ञा भवति। (सु औ जस् अम् औट्, सु औ जस् अम् औट् शस्)

(ख) स्वादिष्वसर्वनामस्थाने इति सूत्रेण ................................................ भवति। (पदसंज्ञा, सर्वनामस्थान संज्ञा)

(ग) 'विश्वपा + आ' इत्यत्र .............. भवति। (आकारलोपः, दीर्घः)

(घ) सर्वनामस्थानभिन्ने ....... प्रत्यये परे भसंज्ञा भवति। (यकारादौ, अजादौ)

(ङ) विश्वपाशब्दात् पञ्चम्या एकवचने ................. विभक्तौ अनुबन्धलोपे .................. इति जाते भसंज्ञायाम् .................... इति सूत्रेण आकारलोपे रुत्वे विसर्गे ........................ इति रूपं भवति।

४. अधोलिखितान् प्रयोगान् साधयत -

विश्वपे, विश्वपोः, विश्वपासु।

५. शुद्धवाक्येषु (√) चिह्नम् अशुद्धेषु च (x) चिह्नं दर्शयत-

(क) विश्वपाशब्दस्य द्वितीयाबहुवचने 'विश्वपाः' इति रूपं भवति। ( )

(ख) 'जस्' प्रत्यये परे पूर्वस्य भसंज्ञा न भवति। ( )

(ग) 'सु औ जस् अम् औट्' प्रत्ययानां सर्वनामस्थानसंज्ञा भवति। ( )

(घ) 'शस्' प्रत्यये परे पूर्वस्य भसंज्ञा भवति। ( )

(ङ) हलादौ प्रत्यये परे पूर्वस्य भसंज्ञा भवति। ( )

६. परस्परं समूहे मेलयत

| अ समूह : | आ समूह : |
| --- | --- |
| (क) स्वादिष्वसर्वनामस्थाने | (क) आकारलोपविधायकम् |
| (ख) सुडनपुंसकस्य | (ख) भसंज्ञकम् |
| (ग) आतो धातोः | (ग) पदसंज्ञकम् |
| (घ) यचि भम् | (घ) सर्वनामस्थानसंज्ञकम् |

७. **अधोलिखितेषु शब्देषु विभक्तिवचने निर्दिशत-**

विश्वपाः, विश्वपः, विश्वपि, विश्वपाभिः ।

## विशेष अभ्यास

१. 'सुट्' प्रत्याहारमा **'सु औ जस् अम् औट्'** प्रत्ययहरू पर्दछन् ।

२. सर्वनामस्थान भन्नाले 'सुट्' प्रत्याहारमा पर्ने प्रत्यय (विभक्ति) लाई बुझाउँछ ।

३. 'विश्वपा' शब्दको **शस्, टा, ङसि, ङस्, आम्, ङि** विभक्तिमा आकारको लोप हुन्छ ।

## शब्दार्थ

विश्वपाः = विश्वको रक्षागर्ने वाला (भगवान्) ।

इच् = 'इ उ ऋ लृ ए ओ ऐ औ' वर्ण ।

सुट् = 'सु औ जस् अम् औट्' यी पाँच विभक्तिहरू ।

सप्तदशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

## (इकारान्तपुँल्लिङ्गशब्दनिरूपणम्)

**हरिः** - हरिशब्दात् प्रातिपदिकात् प्रथमाया एकवचने 'सु' विभक्तौ उकारस्य इत्संज्ञायां लोपे च सकारस्य रुत्वे विसर्गे च 'हरिः' इति भवति । प्रथमाया द्विवचने 'औ' विभक्तौ 'हरि + औ' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे 'हरी' इति सिद्ध्यति ।

### (गुणविधिसूत्रम्)

**सूत्र-९५ जसि च ७ । ३ । १०९**

**ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि । हरयः ।**

(ह्रस्वान्तस्य अङ्गस्य (ह्रस्वस्य इकारान्तस्य, ह्रस्वस्य उकारान्तस्य अङ्गसंज्ञकस्य) गुणो भवति जस् प्रत्यये परे । इकारस्य स्थाने गुणः एकारः, उकारस्य च स्थाने गुणः ओकारो भवति । यथा - 'हरि' शब्दात् प्रथमाया बहुवचने 'जस्' विभक्तौ अनुबन्धलोपे 'हरि + अस्' इत्यत्र 'जसि च' इति सूत्रेण इकारस्य स्थाने गुणे एकारे 'हरे + अस्' इति जाते 'एचोऽयवायावः' इति सूत्रेण 'अय्' आदेशे 'हरयस्' इति स्थिते सकारस्य रुत्वे विसर्गे 'हरयः' इति भवति ।)

### (गुणविधिसूत्रम्)

**सूत्र-९६ ह्रस्वस्य गुणः ७ । ३ । १०८**

सम्बुद्धौ । हे हरे । हरिम् । हरीन् ।

(ह्रस्वान्तस्य अङ्गस्य गुण: सम्बुद्धौ (सम्बोधनस्य एकवचने) परे । यथा - 'हरि' शब्दात् सम्बोधने प्रथमाया एकवचने 'सु' विभक्तौ उकारस्य इत्संज्ञायां लोपे च 'हे हरि + स्' इति स्थिते सम्बुद्धिसंज्ञायां 'ह्रस्वस्य गुण:' इति सूत्रेण गुणे 'हे हरे + स्' इति जाते 'एङ्ह्रस्वात् सम्बुद्धे:' इति सूत्रेण सकारलोपे 'हे हरे' इति भवति । सम्बोधने प्रथमाया द्विवचने औ विभक्तौ पूर्वसवर्णदीर्घे 'हे हरी' इति, बहुवचने 'जस्' विभक्तौ अनुबन्धलोपे गुणे अयादेशे 'हे हरय:' इति भवति । द्वितीया विभक्तौ एकवचने 'अम्' विभक्तौ 'अमिपूर्व:' इति पूर्वरूपे 'हरिम्' इति, द्विवचने प्रथमाद्विवचनवद् 'हरी' इति बहुवचने 'शस्' विभक्तौ अनुबन्धलोपे पूर्वसवर्णदीर्घे 'हरीस्' इति जाते 'तस्माच्छसो न: पुंसि' इति नकारे 'हरीन्' इति भवति ।)

(घिसंज्ञासूत्रम्)

११ ११
**सूत्र-९७ शेषो घ्यसखि १ । ४ । ७**

**अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् ।**

(सखिशब्दं वर्जयित्वा नदीसंज्ञकभिन्नानां ह्रस्वेकारान्तानां ह्रस्वोकारान्तानां शब्दानां घिसंज्ञा भवति । यथा-हरि, कवि भानु, गुरु इत्यादिशब्दानां घिसंज्ञा भवति ।)

('ना' आदेशविधिसूत्रम्)

६१ ११ ७१
**सूत्र-९८ आङो नाऽस्त्रियाम् ७ । ३ । १२०**

**घे: परस्याङो ना स्यादस्त्रियाम् ।** 'आङ्' इति 'टा' संज्ञा प्राचाम् । हरिणा । हरिभ्याम् । हरिभि: ।

(घिसंज्ञकात् परस्य 'टा' इत्यस्य स्थाने 'ना' आदेश: स्यात्, स्त्रीलिङ्गं विहाय । प्राचीनानाम् आचार्याणां मते 'आङ्' पदेन टा प्रत्ययस्य ग्रहणं

भवति । यथा - 'हरि' शब्दात् तृतीयाया एकवचने 'टा' विभक्तौ टकारस्य इत्संज्ञायां लोपे च 'हरि+आ' इति जाते हरिशब्दस्य घिसंज्ञायाम् अनेन सूत्रेण 'ना' आदेशे 'हरि ना' इति जाते 'अट्कुप्वाङ्'– इति सूत्रेण णत्वे 'हरिणा' इति भवति । तृतीयाया द्विवचने 'भ्याम्' विभक्तौ 'हरिभ्याम्' इति, बहुवचने 'भिस्' विभक्तौ सकारस्य रुत्वे विभसर्गे 'हरिभि': इति भवति ।)

### (गुणविधिसूत्रम्)

६।१ ७।१

**सूत्र-९९ घेर्ङिति ७ । ३ । १११**

**घिसंज्ञकस्य ङिति सुपि गुणः । हरये ।**

(घिसंज्ञकस्य अङ्गस्य गुणः स्यात् 'ङे ङसि ङस् ङि' प्रत्ययेषु परतः । यथा- हरिशब्दात् चतुर्थ्या एकवचने ङे विभक्तौ अनुबन्धलोपे 'हरि + ए' इति जाते घिसंज्ञायाम् 'घेर्ङिति' इति सूत्रेण गुणे हरे + ए' इति जाते 'एचोऽयवायावः' इति सूत्रेण अयादेशे 'हरये' इति भवति । चतुर्थ्या द्विवचने 'हरिभ्याम्' बहुवचने 'हरिभ्यः' इति ।)

### (पूर्वरूपविधिसूत्रम्)

६।२ ०

**सूत्र-१०० ङसिङसोश्च ६ । १ । ११०**

**एङो ङसिङसोरति परे पूर्वरूपमेकादेशः । हरेः । हर्योः । हरीणाम् ।**

(एङः (एओवर्णाभ्याम्) ङसिङसोः अकारे परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यात् । यथा - हरिशब्दात् पञ्चम्या एकवचने 'ङसि' विभक्तौ अनुबन्धलोपे 'हरि + अस्' इति जाते घिसंज्ञायां 'घेर्ङिति' इति सूत्रेण गुणे 'हरे + अस्' इति जाते ङसिप्रत्ययावयवे अकारे परे अकारस्य एकारस्य च स्थाने पूर्वरूपमेकादेशे (एकारे) 'हर् ए स्' इति जाते वर्णसम्मेलने सकारस्य रुत्वे विसर्गे 'हरेः' इति भवति ।

पञ्चम्या द्विवचने हरिभ्याम्, बहुवचने हरिभ्यः इति । षष्ठ्या एकवचने 'ङस्' विभक्तौ पञ्चम्या एकवचनवद् 'हरेः' इति भवति । षष्ठ्या द्विवचने 'ओस्' विभक्तौ 'हरि + ओस्' इत्यत्र 'इको यणचि' इति सूत्रेण यणि सकारस्य रुत्वे विसर्गे 'हर्योः' इति, बहुवचने 'आम्' विभक्तौ 'ह्रस्वनद्यापो नुट्' इति सूत्रेण नुडागमे अनुबन्धलोपे 'हरि न् आम्' इति जाते 'नामि' इति सूत्रेण दीर्घे णत्वे 'हरीणाम्' इति भवति ।)

**(औ - अ - विधिसूत्रम्)**

सूत्र-१०१ **अच्च घेः ७ । ३ । ११९**

**इदुद्भ्यामुत्तरस्य ङेरौत्**, घेरत् । हरौ । हर्योः । हरिषु । एवं कव्यादयः । (ह्रस्वेकाराद् ह्रस्वोकाराच्च परस्य 'ङि' इत्यस्य स्थाने औकारः, घिसंज्ञकस्य अङ्गस्य अन्त्यस्य स्थाने ह्रस्वाकारः भवति । यथा - हरिशब्दात् सप्तम्या एकवचने ङि विभक्तौ अनुबन्धलोपे 'हरि + इ' इति जाते घिसंज्ञायाम् अनेन सूत्रेण 'ङि' प्रत्ययस्य स्थाने औकारे 'हरि' इत्यत्र इकारस्य स्थाने अकारे च कृते 'हर + औ' इति जाते 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'हरौ' इति भवति ।

सप्तम्या द्विवचने 'ओस्' विभक्तौ 'हर्योः' इति, बहुवचने 'सुप्' विभक्तौ अनुबन्धलोपे 'आदेशप्रत्यययोः' इति सूत्रेण षत्वे 'हरिषु' इति भवति । ह्रस्व - उकारान्तशब्दानां सिद्धिप्रक्रिया हरिशब्दवद् भवति ।)

## अभ्यासः

१. घिसंज्ञायाः प्रयोजनम् 'टा' प्रत्ययस्य स्थाने 'आङो नाऽस्त्रियाम्' इति सूत्रेण 'ना' आदेशः, **ङे, ङसि, ङस्** प्रत्ययेषु परतः 'घेर्ङिति' इति सूत्रेण गुणः, 'ङि' प्रत्यये 'अच्चघेः' इत्यस्य प्रवृत्तिः ।

२. ह्रस्व - उकारान्तशब्दस्य सिद्धिप्रक्रिया यथा - भानुशब्दात् प्रथमाया एकवचने 'सु' विभक्तौ सकारस्य रुत्वे विसर्गे 'भानुः' इति, द्विवचने 'औ' विभक्तौ पूर्वसवर्ण दीर्घे 'भानू' इति, बहुवचने 'जस्' विभक्तौ 'जसि च' इति गुणे अवादेशे सकारस्य रुत्वे विसर्गे भानवः, इति । द्वितीयाया एकवचने 'अम्' विभक्तौ 'अमिपूर्वः' इति पूर्वरूपे भानुम् इति, द्विवचने 'औट्' विभक्तौ पूर्वसवर्णदीर्घे 'भानू' इति, बहुवचने 'शस्' विभक्तौ अनुबन्धलोपे पूर्वसवर्णदीर्घे 'तस्माच्छसोनःपुंसि' इति सूत्रेण नकारे 'भानून्' इति च । तृतीयाया एकवचने 'टा' विभक्तौ घिसंज्ञायाम् 'आङोना०' इति सूत्रेण 'ना' आदेशे 'भानुना' इति, द्विवचने 'भ्याम्' विभक्तौ 'भानुभ्याम्' इति, बहुवचने 'भ्यस्' विभक्तौ 'भानुभ्यः' इति च । चतुर्थ्या एकवचने 'ङे' विभक्तौ घिसंज्ञायां 'घेर्ङिति' इति गुणे भानो + ए इत्यत्र अवादेशे 'भानवे' इति, द्विवचने 'भ्याम्' विभक्तौ 'भानुभ्याम्' इति, बहुवचने 'भ्यस्' विभक्तौ 'भानुभ्यः' इति च । पञ्चम्या एकवचने 'ङसि' विभक्तौ घिसंज्ञायां गुणे 'भानो + अस्' इति जाते 'ङसिङसोश्च' इति पूर्वरूपे 'भानोः' इति, द्विवचने 'भ्याम्' विभक्तौ, भानुभ्याम्, बहुवचने 'भ्यस्' विभक्तौ भानुभ्यः, इति च । षष्ठ्या एकवचने 'ङस्' विभक्तौ घिसंज्ञायां गुणे पूर्वरूपे 'भानोः' इति द्विवचने 'ओस्' विभक्तौ यणादेशे 'भान्वोः' इति, बहुवचने 'आम्' विभक्तौ नुडागमे दीर्घे 'भानूनाम्' इति च । सप्तम्या एकवचने 'ङि' विभक्तौ घिसंज्ञायाम् 'अच्च घेः' इति सूत्रेण औकारे अकारे च कृते 'भान + औ' इति जाते वृद्धौ 'भानौ इति, द्विवचने 'ओस्' विभक्तौ यणि 'भान्वोः' इति, बहुवचने 'सुप्' विभक्तौ 'आदेशप्रत्यययोः' इति षत्वे 'भानुषु' इति च । सम्बोधने एकवचने 'ह्रस्वस्य गुणः' इति गुणे 'एङ्ह्रस्वात् सम्बुद्धेः' इति सलोपे हे भानो !, द्विवचने हे भानू !, बहुवचने 'हे भानवः इति रूपाणि भवन्ति । एवम् - गुरु, विधु, शम्भु, विष्णु, शिशु- इत्यादय : सिद्ध्यन्ति ।

## अभ्यासार्थं प्रश्नाः

१. **अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत -**

(क) 'जसि च' इति सूत्रेण कस्य गुणो भवति ?

(ख) 'ह्रस्वस्य गुणः' इति सूत्रं कस्मिन् प्रत्यये प्रवर्तते ?

(ग) 'ङसिङसोश्च' इति सूत्रेण किं भवति ?

(घ) 'हरि + ए' इति स्थिते केन सूत्रेण किं कार्यं भवति ?

(ङ) हरिशब्दस्य सप्तम्या एकवचने किं रूपम् ?

२. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थं लिखत -**

(क) घेर्ङिति ।

(ख) ङसिङसोश्च ।

(ग) अच्च घेः ।

३. **अधोलिखितेषु पदेषु विभक्तिं दर्शयत -**

हरी, भानुना, हरेः, भानौ, गुरून्, भान्वोः ।

४. **अधोनिर्दिष्टान् प्रयोगान् साधयत -**

हरिणा, भानवे, हरौ, हे हरे !, हरिषु ।

५. **रिक्तस्थानं पूरयत -**

(क) 'घेर्ङिति' इति सूत्रेण ............ परे गुणो भवति । (ङिति, हलादौ)

(ख) ............ इति सूत्रेण घिसंज्ञा भवति । (अच्च घेः, शेषोघ्यसखि)

(ग) 'आङो नाऽस्त्रियाम्' इति सूत्रेण ..... इत्यस्य स्थाने 'ना' आदेशः । (टा, ङे)

(घ) 'हरि + इ' इत्यत्र ..... इति सूत्रं प्रवर्तते । (अच्च घेः, अकः सवर्णे दीर्घः)

(ङ) हरिशब्दात् षष्ठ्या एकवचने ................ विभक्तौ अनुबन्धलोपे 'हरि + अस्' इति स्थिते घिसंज्ञायां ............ इति सूत्रेण .............. 'हरे + अस्' इति जाते ............... इति सूत्रेण पूर्वरूपे सकारस्य रुत्वे विसर्गे ............ इति रूपं सिद्ध्यति ।

६. भानु, कविशब्दयोः सर्वासु विभक्तिषु रूपाणि लिखत ।

७. परस्परं समूहे मेलयत -

| अ समूहः | आ समूहः |
| --- | --- |
| (क) 'घेर्ङिति' इति | (क) ह्रस्वस्य गुणः |
| (ख) 'ङसिङसोश्च' इति | (ख) 'ङेः' 'औत्' इत्यादेशः |
| (ग) 'अच्च घेः' इति | (ग) पूर्वरूपमेकादेशः |
| (घ) 'जसि च' इति | (घ) ङिति गुणः |
| (ङ) 'हरे + अस्' इत्यत्र | (ङ) 'एचोऽयवायावः' इति अयादेशः |
| (च) 'हरे + ए' इत्यत्र | (च) पूर्वरूपमेकादेशः |

८. शुद्धकथनेषु (√) चिह्नम् अशुद्धेषु च (x) चिह्नं दर्शयत -

(क) हरिशब्दस्य द्वितीयाबहुवचने 'हरीन्' इति रूपम् । ( )

(ख) 'हे भानु + स्' इत्यत्र 'ह्रस्वस्य गुणः' इति सूत्रेण गुणः भवति । ( )

(ग) हरि, कविशब्दयोः रूपाणि तुल्यानि भवन्ति । ( )

(घ) 'कविना' इत्यत्र णत्वं भवति । ( )

(ङ) 'गुरूणाम्' इत्यत्र णत्वं न भवति । ( )

(च) 'हरि + भिस्' इत्यत्र भिसः ऐस् आदेशो न भवति । ( )

## विशेष अभ्यास

१. ह्रस्वइकारान्त पुंल्लिङ्गी शब्दहरूका रूप एकै किसिमले चल्छन् । हरिशब्दका सबै विभक्तिका रूप राम्रोसँग कण्ठ गरेर अन्य इकारान्त शब्दहरूको रूपसिद्धि गर्नु पर्दछ । हरिशब्दका रूपहरू

| विभक्ति | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | हरि: | हरी | हरय: |
| द्वितीया | हरिम् | हरी | हरीन् |
| तृतीया | हरिणा | हरिभ्याम् | हरिभि: |
| चतुर्थी | हरये | हरिभ्याम् | हरिभ्य: |
| पञ्चमी | हरे: | हरिभ्याम् | हरिभ्य: |
| षष्ठी | हरे: | हर्यो: | हरीणाम् |
| सप्तमी | हरौ | हर्यो: | हरिषु |
| सम्बोधन | हे हरे | हे हरी | हे हरय: |

यसैगरी - मुनि, कवि, निधि, विधि, गिरि, अरि, कपि, अतिथि, सेनापति, यति, पाणि इत्यादि शब्दको रूपसिद्धि हुन्छ ।

२. ह्रस्व इकारान्त शब्द झैं ह्रस्व उकारान्त पुँल्लिङ्गी शब्दहरूका रूपसिद्ध हुन्छन् । यहाँ ह्रस्व उकारान्त गुरु शब्दको रूपतालिका प्रदर्शित गरिएको छ -

| विभक्ति | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | गुरु: | गुरू | गुरव: |
| द्वितीया | गुरुम् | गुरू | गुरून् |
| तृतीया | गुरुणा | गुरुभ्याम् | गुरुभि: |
| चतुर्थी | गुरवे | गुरुभ्याम् | गुरुभ्य: |
| पञ्चमी | गुरो: | गुरुभ्याम् | गुरुभ्य: |
| षष्ठी | गुरो: | गुर्वो: | गुरूणाम् |
| सप्तमी | गुरौ | गुर्वो: | गुरुषु |
| सम्बोधन | हे गुरो: | हे गुरू | हे गुरव: |

यस्तै - भानु, विधु, तरु, इन्दु वायु, बाहु, शम्भु, साधु, शिशु, विष्णु, वेणु, पांशु, इत्यादि शब्दका रूपसिद्ध हुन्छन् ।

## शब्दार्थ

हरि: = भगवान् (विष्णु) ।
मुनि: = ऋषि, साधु महात्मा ।
कवि: = कवि ।
निधि: = खजाना ।
विधि: = ब्रह्मा ।
गिरि: = पर्वत (पहाड) ।
कपि: = बानर ।
अतिथि: = पाहुना (तिथि नतोकिकन आउने मानिस) ।
सेनापति: = सेना प्रमुख ।
यति: = सन्यासी ।
ऋषि: = साधु महात्मा ।
पाणि: = हात ।
अरि: = शत्रु ।
गुरु: = अध्यापक, शिक्षक, ठूलो ।
भानु: = सूर्य ।
विधु: = चन्द्रमा ।
तरु: = रूख ।
इन्दु: = चन्द्रमा ।
वायु: = हावा ।
बाहु: = पाखुरा ।
शम्भु: = शिव भगवान् ।
साधु: = राम्रो, असल मानिस ।
वेणु: = बाँस ।
पांशु: = धूलो ।

अष्टादशः पाठः

# अजन्तपुंलिङ्गप्रकरणम्

(ऋकारान्तशब्दनिरूपणम्)

('अनङ्' आदेशविधिसूत्रम्)

६।३ ०

सूत्र-१०२ **ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४**

**ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ।**

(ह्रस्व - ऋकारान्तशब्दानाम्, उशनस् - पुरुदंसस्- अनेहस् शब्दानाञ्च 'अनङ्' आदेशः स्यात् सम्बुद्धिभिन्ने 'सु' प्रत्यये परे। यथा- पितृशब्दात् प्रथमाया एकवचने 'सु' विभक्तौ उकारस्य इत्संज्ञायां लोपे च कृते 'पितृ + स्' इति जाते 'ऋदुशनस्' इति सूत्रेण ऋकारस्य स्थाने 'अनङ्' आदेशो भवति। 'अनङ्' आदेशे ङकारस्य 'हलन्त्यम्' इति सूत्रेण इत्संज्ञायां लोपो भवति नकाराद् अकार उच्चारणार्थः, तथा च 'अन्' इत्यस्य शेषः, 'पित् अन् स्' इति स्थिते)

(उपधासंज्ञासूत्रम्)

५।१ ५।१ १।१ १।१

सूत्र-१०३ **अलोऽन्त्यात् पूर्व उपधा १।१।६५**

**अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः।**

(अन्त्यवर्णात् पूर्वस्य वर्णस्य उपधासंज्ञा भवति। यथा - 'पित् अन्' इत्यत्र अन्त्यवर्णः नकारः, ततः पूर्वोवर्णः अकारः, तस्य उपधासंज्ञा भवति।)

(दीर्घविधिसूत्रम्)

**सूत्र-१०४ सर्वनामस्थाने[७।१] च[०] असम्बुद्धौ[७।१] ६ । ४ । ८**

**नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ।**

(सम्बुद्धिभिन्ने सर्वनामस्थाने (सु औ जस् अम् औट् प्रत्यये) परे नकारान्तस्य उपधासंज्ञकस्य दीर्घः स्यात् । यथा-'पितन् + स्' इत्यत्र सम्बुद्धिभिन्ने सर्वनामस्थाने सकारे परे नान्तं 'पितन्' इति तस्य उपधायाः अकारस्य दीर्घे 'पितान् + स्' इति भवति ।)

(अपृक्तसंज्ञासूत्रम्)

**सूत्र-१०५ अपृक्त[१।१] एकाल् प्रत्ययः[१।१] १ । २ । ४१**

**एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ।**

(एकवर्णरूपस्य प्रत्ययस्य अपृक्तसंज्ञा भवति । यथा - 'पितान् + स्' इत्यत्र 'स्' इति एकवर्णरूपः प्रत्ययः, अतः सकारस्य अपृक्तसंज्ञा भवति ।)

(लोपविधिसूत्रम्)

**सूत्र-१०६ हल्ङ्याब्भ्यो[५।३] दीर्घात्[५।१] सुतिस्यपृक्तं[१।१] हल्[१।१] ६ । १ । ६८**

**हलन्तात् परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं 'सु ति सि' इत्येतदपृक्तं हल् लुप्यते ।**

(हलन्तात् (यस्य अन्ते व्यञ्जनवर्णाः सन्ति तस्मात्) ङ्यन्तात्, (यस्य अन्ते ङी प्रत्ययः अस्ति तस्मात्) आबन्तात् (यस्य अन्ते 'आप्' प्रत्ययः अस्ति तस्मात्) परस्य सु-ति-सि-प्रत्ययावयवस्य अपृक्तस्य हल्वर्णस्य (व्यञ्जनस्य) लोपः स्यात् । यथा- 'पितान्+ स्' इत्यत्र हलन्तात् परस्य सुप्रत्ययावयवस्य सकारस्य लोपे 'पितान्' इति भवति ।)

(नलोपविधिसूत्रम्)

सूत्र-१०७ नलोपः[११] प्रातिपदिकान्तस्य[६१] ८ । २ । ७

**प्रातिपदिकसंज्ञकं यत् पदं तदन्तस्य नस्य लोपः ।**

(प्रातिपदिकावयवस्य पदान्तस्य नकारस्य लोपः स्यात् । यथा - 'पितान्' इत्यत्र नकारस्य लोपे 'पिता' इति भवति ।)

(गुणविधिसूत्रम्)

सूत्र-१०८ ऋतो[६१] ङिसर्वनामस्थानयोः[७२] ७ । ३ । ११०

**ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च ।**

(ऋकारान्तस्य अङ्गस्य गुणः स्यात् सर्वनामस्थाने (सु औ जस् अम् औट् प्रत्यये) ङि प्रत्यये च परतः । यथा - 'पितृ' शब्दात् 'औ' विभक्तौ 'पितृ+औ' इति जाते 'औ' इत्यस्य 'सुडनपुंसकस्य' इति सूत्रेण सर्वनामस्थानसंज्ञायां सर्वनामस्थाने 'औ' प्रत्यये परे 'ऋतोङि' इति सूत्रेण गुणे 'उरण् रपरः' इति सूत्रेण रपरत्वे च कृते 'अर्' इति जाते 'पित् अर् औ' इति स्थिते वर्ण-सम्मेलने 'पितरौ' इति भवति । एवम् - प्रथमाया बहुवचने 'जस्' विभक्तौ अनुबन्धलोपे सर्वनामस्थानसंज्ञायाम् 'ऋतोङि' इति गुणे रपरे वर्णसम्मेलने सकारस्य रुत्वे विसर्गे 'पितरः' इति भवति ।

पितृशब्दस्य सम्बोधने प्रथमाया एकवचने सुविभक्तौ अनुबन्धलोपे 'हे पितृ + स्' इति जाते 'ऋतो ङि' इति सूत्रेण गुणे रपरत्वे 'हे पित् अर् स्' इति जाते सकारस्य 'हल्ङ्याब्भ्यो-०' इति सूत्रेण लोपे वर्णसम्मेलने रेफस्य विसर्गे 'हे पितः' इति भवति । द्विवचनबहुवचनयोः हे पितरौ हे, पितरः, इति । द्वितीयाया एकवचने पितृशब्दात् 'अम्' विभक्तौ 'ऋतो ङि०' इति गुणे रपरत्वे 'पितरम्' इति, द्विवचने 'औट्' विभक्तौ गुणे 'पितरौ' इति, बहुवचने

'शस्' विभक्तौ अनुबन्धलोपे 'पितृ + अस्' इत्यत्र' प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घे 'तस्माच्छसो नः पुंसि' इति नकारे 'पितॄन्' इति च ।

तृतीया विभक्तौ एकवचने 'टा' विभक्तौ अनुबन्धलोपे 'पितृ + आ' इति जाते 'इको यणचि' इति सूत्रेण यणि 'पित्रा' इति, द्विवचने 'भ्याम्' विभक्तौ' पितृभ्याम्' इति, बहुवचने 'भिस्' विभक्तौ पितृभिः इति च रूपाणि भवन्ति ।

चतुर्थी विभक्तौ - एकवचने 'ङे' विभक्तौ अनुबन्धलोपे यणि 'पित्रे' इति, द्विवचने पितृभ्याम्, बहुवचने 'पितृभ्यः' इति च रूपाणि ।)

**(उकारादेशविधिसूत्रम्)**

सूत्र-१०९ **ऋत उत्** ६।१।१११

**ऋतो ङसिङसोरति परे पूर्वपरयोरुदेकादेशः स्यात्**

(ह्रस्व - ऋकाराद् ङसिङसोः (ङसिप्रत्ययस्य ङस्प्रत्ययस्य वा) अकारे परे ऋकारस्य अकारस्य च स्थाने एकः ह्रस्व उकाररूप आदेशः स्यात् । उकारे कृते 'उरण् रपरः' इति सूत्रेण रपरत्वे 'उर्' इति भवति । यथा - पितृशब्दात् पञ्चम्या एकवचने 'ङसि 'विभक्तौ, षष्ठ्या एकवचने 'ङस्' विभक्तौ वा अनुबन्धलोपे 'पितृ + अस्' इति जाते 'ऋत उत्' इति सूत्रेण ऋकाराकारयोः स्थाने उकारे रपरत्वे च कृते 'पितुर् स्' इति भवति ।)

**(संयोगान्तलोपविधिसूत्रम्)**

सूत्र-११० **संयोगान्तस्य लोपः** ८।२।२३

**संयोगान्तं यत्पदं तदन्त्यस्य लोपः स्यात् ।**

(संयोगः अन्ते यस्य तादृशस्य पदस्य अन्त्यस्य लोपो भवति । यथा - 'पितुर् स्' इत्यत्र रकारसकारयोः संयोगसंज्ञायां संयोगस्य अन्ते विद्यमानस्य सकारस्य लोपो भवति ।)

### (सलोपनियमसूत्रम्)

५।१ ६।१

**सूत्र-१११ रात् सस्य** ८ । २ । २४

रेफात् संयोगान्तस्य सस्यैव लोपो नान्यस्य ।

(रेफात् परस्य संयोगान्तस्य सकारस्यैव लोपो भवति न तु अन्यस्य । यथा - 'पितुर् स्' इत्यत्र रेफात् परस्य सकारस्य अनेन नियमेन 'संयोगान्तस्य०' इति सूत्रेण लोपः, 'पितुर्' इत्यत्र रेफस्य विसर्गे 'पितुः' इति भवति ।)

पञ्चम्या द्विवचने पितृभ्याम्, बहुवचने 'पितृभ्यः' इति च । षष्ठ्या द्विवचने 'ओस्' विभक्तौ यणि रुत्वे विसर्गे 'पित्रोः' इति, बहुवचने 'आम्' विभक्तौ 'पितृ + आम्' इति जाते 'ह्रस्वनद्यापो नुट्' इति सूत्रेण नुडागमे अनुबन्धलोपे 'नामि' इति दीर्घे 'पितॄनाम्' इति भवति ।)

### (णत्वविधायकं वार्तिकम्)

**(ऋवर्णान्नस्य णत्वं वाच्यम्)**

(ऋकारात् परस्य नकारस्य स्थाने णकारो भवति । यथा 'पितृ नाम्' इत्यत्र ऋकारात् परः 'नाम्' इत्यस्य नकारः तस्य णकारे 'पितॄणाम्' इति भवति ।)

सप्तम्या एकवचने 'ङि' विभक्तौ अनुबन्धलोपे 'ऋतो ङि-०' इति गुणे रपरत्वे च कृते वर्णसम्मेलने 'पितरि' इति, द्विवचने षष्ठ्या द्विवचनवत् 'पित्रोः' इति, बहुवचने 'सुपि' अनुबन्धलोपे षत्वे 'पितृषु' इति च रूपाणि भवन्ति ।)

## अभ्यासः

**१. ह्रस्व - ऋकारान्तशब्दात् प्रथमाया एकवचने ऋकारस्य स्थाने 'अनङ्' आदेशो भवति । औ, जस्, अम्, औट् प्रत्ययेषु परतः ऋकारस्य स्थाने गुणो भवति ।**

**२. पितृशब्दवद् भ्रातृ-जामातृशब्दयोः रूपाणि भवन्ति ।**

३. **प्रयोगसाधनप्रकारः**

(क) **पिता** - पितृशब्दात् प्रातिपादिकात् प्रथमाया एकवचने 'सु' विभक्तौ अनुबन्धलोपे 'पितृ + स्' इति जाते 'ऋदुशनस् पुरुदंसोऽनेहसां च' इति सूत्रेण 'अनङ्' आदेशे अनुबन्धलोपे' पित् अन् स्' इति जाते उपधासंज्ञायां 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रेण उपधादीर्घे 'पितान् स्' इति जाते अपृक्तसंज्ञायां 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' इति सूत्रेण सकारलोपे 'पितान्' इति स्थिते 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रेण नलोपे 'पिता' इति रूपं सिद्धम् ।

(ख) **पितरौ** - पितृशब्दात् प्रथमाया द्विवचने 'औ' विभक्तौ 'पितृ + औ' इति जाते सर्वनामस्थानसंज्ञायाम् 'ऋतो ङिसर्वनामस्थानयोः' इति सूत्रेण गुणे रपरत्वे 'पित् अर् औ' इति जाते वर्णसम्मेलने 'पितरौ' इति रूपं सिद्धम् ।

(ग) **पितुः** - पितृशब्दात् प्रातिपदिकात् पञ्चम्या एकवचने ङसि विभक्तौ अनुबन्धलोपे 'पितृ + अस्' इति जाते 'ऋत उत्' इति सूत्रेण उकारैकादेशे रपरत्वे 'पित् उर् स्' इति जाते 'रात्सस्य' इति नियमेन सकारस्य संयोगान्तलोपे रेफस्य विसर्गे वर्णसम्मेलने 'पितुः' इति रूपं सिद्धम् ।

(घ) **हे पितः** पितृशब्दात् सम्बोधने प्रथमाया एकवचने 'सु' विभक्तौ अनुबन्धलोपे हे पितृ + स् इत्यत्र 'ऋतो ङिसर्वनामस्थानयोः' इति सूत्रेण गुणे रपरत्वे 'हे पित् अर् स्' इति जाते सकारस्य 'हल्ङ्याब्भ्यो दीर्घा०' इति सूत्रेण लोपे रेफस्य विसर्गे वर्णसम्मेलने 'हे पितः' इति रूपं निष्पन्नम् ।

## अभ्यासार्थं प्रश्नाः

१. अधोलिखितानां प्रश्नानाम् उत्तराणि दत्त -

(क) 'अनङ' आदेशविधायकं सूत्रं किम् ?

(ख) 'ऋतो ङिसर्वनामस्थानयोः' इति सूत्रेण कस्य स्थाने किं भवति ?

(ग) पञ्चम्या एकवचने 'पितृ + अस्' इत्यत्र केन सूत्रेण किं भवति ?

(घ) उपधासंज्ञा कस्य भवति ?

(ङ) सर्वनामस्थानसंज्ञा विधायकं सूत्रं किम् ?

(च) 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रं कुत्र प्रवर्तते ?

(छ) प्रातिपदिकावयवस्य पदान्तस्य नकारस्य लोपः केन भवति ?

२. शुद्धं लिखत -

(क) हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ।

(ख) ऋदुशनसपुरुदंसोऽनेहसां च ।

(ग) अलोऽन्त्यात् पूर्व उपधा ।

३. अधोलिखितानां सूत्राणाम् अर्थं नेपालीभाषायां लिखत -

(क) नलोपः प्रातिपदिकान्तस्य ।

(ख) सर्वनामस्थाने चासम्बुद्धौ ।

(ग) ऋतो ङिसर्वनामस्थानयोः ।

४. रिक्तस्थानं पूरयत -

(क) 'ऋदुशनस्पुरुदंसोऽनेहसां च' इति सूत्रेण ......... भवति । (अनङ्, गुणः)

(ख) उपधासंज्ञाविधायकम् ......................... इति सूत्रम् । (अलोऽन्यात् पूर्व उपधा, अपृक्त एकाल्प्रत्ययः)

(ग) सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण ............... भवति । (गुणः, दीर्घः)

(घ) 'पितृ + औ' इत्यत्र ............... इति सूत्रेण गुणो भवति । (आद् गुणः, ऋतो ङिसर्वनामस्थानयोः)

(ङ) पितृ + ए इत्यत्र ...................... इति सूत्रेण यणादेशे .................. इति रूपं भवति ।

५. अधोलिखितान् प्रयोगान् साधयत-

पितरः, पितरम्, पित्रोः, पितरि,

६. **अधोलिखितेषु शुद्धकथनेषु (√) चिह्नम्, अशुद्धेषु च (x) चिह्नं दर्शयत**

(क) 'पितृ + स्' इत्यत्र ऋकारस्य स्थाने 'अनङ्' आदेशो भवति । ( )

(ख) नान्तस्य उपधाया दीर्घो न भवति । ( )

(ग) 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रेण नकारलोपः भवति । ( )

(घ) अन्त्याद् अलः पूर्वो वर्णः अपृक्तसंज्ञको भवति । ( )

(ङ) ऋवर्णात् परस्य नकारस्य णत्वं भवति । ( )

(च) एकवर्णरूपस्य प्रत्ययस्य उपधासंज्ञा भवति । ( )

७. **अधोलिखितेषु पदेषु विभक्तिवचने निर्दिशत -**

पितरः, पित्रे, पितृभ्याम्, पित्रोः ।

८. **पितृशब्दस्य सर्वासु विभक्तिषु रूपतालिकां प्रदर्शयत ।**

## विशेष अभ्यास

१. 'पितृ' शब्द जस्तै ऋकारान्त पुल्लिङ्गी शब्दहरूका रूप बन्छन् । 'पितृ' शब्द जस्तै रूप चल्ने 'भ्रातृ' शब्दको रूप तालिका यस प्रकार छ -

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | भ्राता | भ्रातरौ | भ्रातरः |
| द्वितीया | भ्रातरम् | भ्रातरौ | भातॄन् |
| तृतीया | भ्रात्रा | भ्रातृभ्याम् | भ्रातृभिः |
| चतुर्थी | भ्रात्रे | भ्रातृभ्याम् | भ्रातृभ्यः |
| षष्ठी | भ्रातुः | भ्रात्रोः | भ्रातृणाम् |
| सप्तमी | भ्रातरि | भ्रात्रोः | भ्रातृषु |
| सम्बोधन | हे भ्रातः | हे भ्रातरौ | हे भ्रातरः |

यस्तै - जामातृ शब्दको रूप चल्छ ।

## शब्दार्थ

भ्रातृ = भाइ, दाजु

जामातृ = ज्वाइँ

एकोनविंशः पाठः

# अजन्तस्त्रीलिङ्गप्रकरणम्

(आकारान्तस्त्रीलिङ्गशब्दनिरूपणम्)

**रमा** - रमाशब्दात् प्रथमाया एकवचने सुविभक्तौ अनुबन्धलोपे 'रमा + स्' इति जाते 'हल्ङ्याब्भ्यो दीर्घात्-०' इति सूत्रेण अपृक्तस्य सकारस्य लोपे 'रमा' इति भवति ।

('शी' आदेशविधिसूत्रम्)

**सूत्र-११२ औङ आपः ७ । १ । १८**

**आबन्तादङ्गात् परस्यौङः शी स्यात् । 'औङः' इति औकारविभक्तेः संज्ञा ।**

(आबन्ताद् (आप् प्रत्ययः अन्ते यस्य तस्मात्) अङ्गात् परस्य 'औ' प्रत्ययस्य 'औट्' प्रत्ययस्य स्थाने 'शी' आदेशो भवति । 'औङ्' इत्यनेन 'औ' प्रत्ययस्य 'औट्' प्रत्ययस्य च ग्रहणं भवति । यथा - रमाशब्दात् प्रथमाया द्विवचने औ विभक्तौ 'रमा + औ' इत्यत्र आबन्तम् अङ्गं 'रमा' इति तस्मात् परस्य 'औ' इत्यस्य स्थाने 'औङ आपः' इति सूत्रेण 'शी' आदेशे अनुबन्धलोपे 'रमा + ई' इति जाते 'आद् गुणः' इति सूत्रेण गुणे 'रमे' इति भवति । प्रथमाया बहुवचने 'जस्' विभक्तौ अनुबन्धलोपे 'रमा + अस्' इति जाते 'अकः सवर्णे दीर्घः' इति सूत्रेण सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'रमाः' इति भवति ।)

('एकार' आदेशविधिसूत्रम्)

**सुत्र-११३ सम्बुद्धौ च ७ । ३ । १०६**

**आप एकारः स्यात् सम्बुद्धौ ।**

(आबन्तस्य अङ्गस्य एकार आदेशः स्यात्, सम्बुद्धिसंज्ञके प्रत्यये परे । यथा - रमाशब्दात् सम्बोधने प्रथमाया एकवचने 'सु'विभक्तौ अनुबन्धलोपे

सम्बुद्धिसंज्ञायां 'हे रमा + स्' इति स्थिते 'सम्बुद्धौ च' इति सूत्रेण आकारस्य स्थाने एकारे 'हे रमे + स्' इति जाते 'एङ्ह्रस्वात् सम्बुद्धेः' इति सूत्रेण सकारस्य लोपे 'हे रमे' इति भवति ।

सम्बोधने द्विवचनबहुवचनयोः हे रमे, हे रमाः इति । द्वितीयाविभक्तौ एकवचने 'अम्' विभक्तौ 'अमि पूर्वः' इति सूत्रेण पूर्वरूपे 'रमाम्' इति, द्विवचने 'औट्' विभक्तौ अनुबन्धलोपे 'औङ आपः' इति 'शी' आदेशे अनुबन्धलोपे गुणे 'रमे' इति, बहुवचने 'शस्' विभक्तौ शकारस्य इत्संज्ञायां लोपे च 'रमा + अस्' इति जाते 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्ण-दीर्घे सकारस्य रुत्वे विसर्गे 'रमाः' इति च रूपाणि भवन्ति ।)

('एकार' आदेशविधिसूत्रम्)

सूत्र-११४ आङि[७१] चापः[० ६१] ७ । ३ । १०५

**आङि ओसि चाप एकारः ।**

(टाप्रत्यये ओस् प्रत्यये च परे आबन्तस्य आकारस्य स्थाने एकारः स्यात् । यथा - रमाशब्दात् तृतीयाया एकवचने 'टा' विभक्तौ टकारस्य इत्संज्ञायां लोपे च कृते 'रमा + आ' इति स्थिते 'टा' प्रत्यये परे आबन्तस्य 'रमा' इत्यस्य अन्त्यस्य आकारस्य एकारे 'रमे + आ' इति जाते 'एचोऽयवायावः' इति सूत्रेण 'अय्' आदेशे 'रम् अय् आ' इति जाते वर्णसम्मेलने 'रमया' इति भवति । तृतीयाविभक्तौ द्विवचने 'भ्याम्' विभक्तौ' रमाभ्याम्' इति, बहुवचने 'भिस्' विभक्तौ सकारस्य रुत्वे विसर्गे 'रमाभिः' इति च ।)

(याडागमविधिसूत्रम्)

११ ४१

सूत्र-११५ याडापः ७ । ३ । १०५

**आपोङितो याट् ।**

(आबन्ताद् अङ्गात् परे ङे ङसि-ङस्-ङि-प्रत्ययावयवः 'याड्' आगमो भवति । यथा- रमाशब्दात् चतुर्थ्या एकवचने 'ङे' विभक्तौ अनुबन्धलोपे 'रमा + ए' इति जाते आबन्तम् अङ्गं 'रमा' इति ततः परस्य ङित्प्रत्ययस्य (एकारस्य) 'याड्' आगमे टकारस्य इत्संज्ञायां लोपे च 'रमाया + ए' इति जाते 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'रमायै' इति भवति ।

चतुर्थ्या द्विवचने 'भ्याम्' विभक्तौ 'रमाभ्याम्' इति, बहुवचने 'भ्यस्' विभक्तौ रुत्वे विसर्गे 'रमाभ्यः' इति च । पञ्चम्या एकवचने 'ङसि' विभक्तौ अनुबन्धलोपे 'रमा + अस्' इति जाते 'याडापः' इति सूत्रेण याडागमे अनुबन्धलोपे 'रमाया + अस्' इत्यत्र 'अकः सवर्णे दीर्घः' इति सूत्रेण सवर्ण-दीर्घे सकारस्य रुत्वे विसर्गे 'रमायाः' इति, द्विवचने 'भ्याम्' विभक्तौ' 'रमाभ्याम्' इति, बहुवचने 'भ्यस्' विभक्तौ सकारस्य रुत्वे विसर्गे 'रमाभ्यः' इति च । षष्ठ्या एकवचने 'ङस्' विभक्तौ अनुबन्धलोपे याडागमे अनुबन्धलोपे सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'रमायाः' इति, द्विवचने 'ओस्' विभक्तौ 'रमा + ओस्' इत्यत्र 'आङि चापः' इति सूत्रेण आकारस्य एकारे 'रमे + ओस्' इति जाते 'एचोऽयवायावः' इति सूत्रेण 'अयादेशे' 'रम् अय् ओस्' इति जाते वर्णसम्मेलने सकारस्य रुत्वे विसर्गे 'रमयोः इति, बहुवचने 'आम्' विभक्तौ 'रमा + आम्' इति जाते 'ह्रस्वनद्यापो नुट्' इति सूत्रेण नुडागमे अनुबन्धलोपे 'रमा न् आम्' इति जाते 'अट्कुप्वाङ्-०' इति सूत्रेण णत्वे वर्णसम्मेलने 'रमाणाम्' इति च ।

('आम्' आदेशविधिसूत्रम्)

६।१ १।१ ५।३

सूत्र-११६ ङेराम् नद्याम्नीभ्यः ७ । ३ । ११६

**नद्यन्ताद् आबन्ताद् 'नी' शब्दात् परस्य ङेराम् ।**

(नद्यन्ताद् (नदीसंज्ञकशब्दाः अन्ते यस्य तस्मात्) आबन्ताद् 'नी' शब्दात् च परस्य 'ङि' इत्यस्य स्थाने 'आम्' आदेशः स्यात् । यथा - रमाशब्दात् सप्तम्या एकवचने 'ङि' विभक्तौ अनुबन्धलोपे 'रमा + इ' इति जाते आबन्तम् अङ्गं 'रमा' इति ततः परस्य 'ङि' इत्यस्य स्थाने 'आम्' आदेशे' 'रमा + आम्' 'इति जाते 'याडापः' इति सूत्रेण 'याड्' आगमे अनुबन्धलोपे 'रमाया + आम्' इति जाते सवर्णदीर्घे 'रमायाम्' इति भवति ।

सप्तम्या द्विवचने 'ओस्' विभक्तौ षष्ठ्या द्विदचनवद् 'रमयोः' इति, बहुवचने 'सुप्' विभक्तौ पकारस्य इत्संज्ञायां लोपे च 'रमासु' इति भवति । एवम् - दुर्गा, अम्बिका, लता, उमा, गङ्गा, यमुना, कथा इत्यादिशब्दानां रूपाणि सिद्ध्यन्ति ।

सर्वनामसंज्ञकस्य सर्वाशब्दस्य प्रथमाविभक्तौ एकवचने सर्वा इति, द्विवचने 'सर्वे' इति, बहुवचने 'सर्वाः' इति । द्वितीयाविभक्तौ सर्वाम् इति, द्विवचने 'सर्वे' इति, बहुवचने 'सर्वाः' इति । तृतीयाविभक्तौ एकवचने 'सर्वया' इति, द्विवचने 'सर्वाभ्याम्' इति, बहुवचने 'सर्वाभिः' इति च रूपाणि रमाशब्दवत् सिद्ध्यन्ति ।)

(स्याडागम-ह्रस्वविधिसूत्रम्)

५।१ १।१ १।१ ०

सूत्र-११७ सर्वनाम्नः स्याड्ढ्रस्वश्च ७ । ३ । ११८

**आबन्तात् सर्वनाम्नो ङितः स्याट् स्याद्, आपश्च ह्रस्वः ।**

(आबन्तात् सर्वनामसंज्ञकाद् ङित् प्रत्ययेषु (ङे, ङसि ङस्, ङि प्रत्ययेषु) 'स्याड्' आगमो भवति, आकारस्य ह्रस्वश्च भवति ।

यथा - सर्वाशब्दात् चतुर्थ्या एकवचने 'ङे' विभक्तौ ङकारस्य

इत्संज्ञायां लोपे च 'सर्वा + ए' इति जाते 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति सूत्रेण 'स्याड्' आगमे आकारस्य ह्रस्वे च कृते टकारस्य इत्संज्ञायां लोपे 'सर्वस्या + ए' इति जाते 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'सर्वस्यै' इति भवति । चतुर्थ्यां द्विवचने सर्वाभ्याम्' इति, बहुवचने 'सर्वाभ्यः' इति । पञ्चमीविभक्तौ = एकवचने 'ङसि' विभक्तौ अनुबन्धलोपे 'सर्वा + अस्' इति जाते 'सर्वानाम्नः स्याड्-०' इति सूत्रेण स्याडागमे आकारस्य ह्रस्वे च कृते 'सर्वस्या+अस्' इति जाते सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'सर्वस्याः' इति, द्विवचने 'सर्वाभ्याम्' बहुवचने 'सर्वाभ्यः इति । षष्ठ्या एकवचने 'ङस्' विभक्तौ अनुबन्धलोपे 'सर्वनाम्न : स्याड्-०' इति सूत्रेण स्याडागमे ह्रस्वे सवर्णदीर्घे रुत्वे विसर्गे 'सर्वस्याः' इति, द्विवचने 'ओस्' विभक्तौ 'आङि चापः' इति सूत्रेण एकारे 'सर्वे + ओस्' इति जाते 'एचोऽयवायावः' इति सूत्रेण अयादेशे 'सर्व अय् ओस्' इति जाते वर्णसम्मेलने रुत्वे विसर्गे 'सर्वयोः' इति, बहुवचने 'आम्' विभक्तौ 'आमि सर्वनाम्नः सुट्' इति सूत्रेण 'सुडागमे' अनुबन्धलोपे 'सर्वासाम्' इति भवति । सप्तम्या एकवचने 'ङि' विभक्तौ अनुबन्धलोपे 'ङेराम्नद्याम्नीभ्यः' इति सूत्रेण आम् आदेशे 'सर्वा + आम्' इति जाते 'सर्वनाम्नः स्याड्-०' इति सूत्रेण स्याडागमे अनुबन्धलोपे ह्रस्वे च कृते 'सर्वस्याम्' इति, द्विवचने सर्वयोः, बहुवचने 'सर्वासु' इति रूपाणि सिद्ध्यन्ति ।)

## अभ्यासः

१. **आकारान्तात् स्त्रीलिङ्गे विद्यमानात् शब्दात् प्रथमाया द्विवचने द्वितीयाया द्विवचने 'औ' इत्यस्य स्थाने 'शी' इति आदेशः, तृतीयाया एकवचने 'टा' प्रत्यये परे पूर्वस्य 'आप्' इत्यस्य आकारस्य एकारः, षष्ठ्या द्विवचने सप्तम्या द्विवचने च 'ओस्' प्रत्यये परे 'आप्' इत्यस्य आकारस्य एकारो भवति ।**

२. आबन्ताद् अङ्गात् परे स्थितानां ङे-ङसि-ङस्-ङिप्रत्ययानां याडागमो भवति । तथा च चतुर्थ्या एकवचने, पञ्चम्या एकवचने, षष्ठ्या एकवचने, सप्तम्या एकवचने याडागमो भवति । सप्तम्या एकवचने 'ङि' प्रत्ययस्य स्थाने 'आम्' आदेशो भवति ।

३. आबन्तात् सर्वनामसंज्ञकात् - ङे-ङसि-ङस्-ङि प्रत्ययानां 'स्याड्' आगमो भवति, स्याडागमे पूर्वस्य आकारस्य ह्रस्वो भवति ।

प्रयोगसिद्धिप्रकार:

(क) **रमया** - रमाशब्दात् प्रातिपदिकात् तृतीयाया एकवचने 'टा' विभक्तौ अनुबन्धलोपे 'रमा + आ' इति जाते 'आङि चाप:' इति सूत्रेण एकारे 'रमे+आ' इति जाते 'एचोऽयवायाव:' इति सूत्रेण अयादेशे वर्णसम्मेलने 'रमया' इति रूपं सिद्ध्यति ।

(ख) **रमायै** - रमाशब्दात् प्रातिपदिकात् चतुर्थ्या एकवचने 'ङे' विभक्तौ अनुबन्धलोपे 'रमा + ए' इति जाते 'याडाप: इति सूत्रेण 'याडागमे अनुबन्धलोपे 'रमाया + ए' इति जाते 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'रमायै' इति रूपं सिद्धम् ।

(ग) **रमायाम्** - रमाशब्दात् प्रातिपदिकात् सप्तम्या एकवचने 'ङि' विभक्तौ अनुबन्धलोपे 'ङेराम्नद्याम्नीभ्य:' इति सूत्रेण 'आम्' आदेशे 'रमा + आम्' इति जाते 'याडाप:' इति सूत्रेण याडागमे अनुबन्धलोपे सवर्णदीर्घे 'रमायाम्' इति रूपं सिद्धम् ।

(घ) **सर्वस्यै** - सर्वाशब्दात् प्रातिपदिकात् चतुर्थ्या एकवचने 'ङे' विभक्तौ अनुबन्धलोपे 'स्याड्' आगमे अनुबन्धलोपे आकारस्य ह्रस्वे च कृते 'सर्वस्या + ए' इति जाते 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'सर्वस्यै' इति भवति ।

## अभ्यासार्थ प्रश्नाः

१. **अधोलिखितानां प्रश्नानाम् उत्तराणि दत्त –**

(क) 'औङ आपः' इति सूत्रेण कस्य स्थाने किं भवति ?

(ख) 'सम्बुद्धौ च' इति सूत्रं किं करोति ?

(ग) रमाशब्दात् प्रथमाया एकवचने 'रमा + स्' इत्यत्र सलोपविधायकं सूत्रं किम् ?

(घ) 'आङि चापः' इति सूत्रेण कस्मिन् प्रत्यये परे किं भवति ?

(ङ) 'ङेराम्नद्याम्नीभ्यः' इति सूत्रं किं करोति ?

२. **शुद्धं लिखत –**

(क) ङेराम्नद्याम्नीभ्यः ।

(ख) सर्वनाम्नः स्याड्ढ्रस्वश्च ।

(ग) सम्बुद्धौ च ।

३. **अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थ लिखत –**

(क) औङ आपः ।

(ख) आङि चापः ।

(ग) सर्वनाम्नः स्याड्ढ्रस्वश्च ।

(घ) याडापः ।

४. **अधो लिखितेषु पदेषु विभक्तिवचने निर्दिशत –**

रमे, रमायाः, रमायाम्, सर्वस्यै, सर्वासाम्, सर्वस्याम् ।

५. अधोलिखितान् प्रयोगान् साधयत -

सर्वया, रमयोः, हे रमे, सर्वस्याः, रमे ।

६. रिक्तस्थानं पूरयत -

(क) आबन्ताद् अङ्गात् परस्य ............... शी स्यात् । (औङः, आपः)

(ख) 'सम्बुद्धौ च' इति सूत्रेण ............ एकारो भवति । (ङितः, आपः)

(ग) 'टा' प्रत्यये परे आकारस्य स्थाने एकार ............................. इति सूत्रेण भवति । (याडापः, आङि चापः)

(घ) सर्वाशब्दात् चतुर्थ्या एकवचने 'सर्वा + ए' इत्यत्र ...................... भवति । (याट्, स्याड्)

(ङ) रमाशब्दात् चतुर्थ्या एकवचने ................ विभक्तौ 'याडापः' इति सूत्रेण .................. आगमे अनुबन्धलोपे .................. इति सूत्रेण वृद्धौ ...................... इति रूपं भवति ।

७. शुद्धवाक्ये (√) चिह्नम् अशुद्धे च (x) चिह्नं निर्दिशत -

(क) रमाशब्दस्य चतुर्थ्या एकवचने 'रमायै' इति रूपं भवति । ( )

(ख) सर्वाशब्दस्य पञ्चम्या एकवचने 'सर्वायाः' इति रूपं भवति । ( )

(ग) रमाशब्दात् ङिद्विभक्तिषु 'याड्' आगमो भवति । ( )

(घ) सर्वाशब्दात् ङिद्विभक्तिषु 'याड्' न भवति । ( )

(ङ) रमाशब्दस्य सर्वाशब्दस्य च सम्बुद्धौ तुल्यं रूपं भवति । ( )

८. रमाशब्दस्य रूपतालिकां प्रदर्शयत

## विशेष अभ्यास

१. रमा शब्दजस्तै अन्य आकारान्त स्त्रीलिङ्गी शब्दहरूका रूप सिद्ध हुन्छन् । यहाँ उदाहरणका रूपमा 'लता' शब्दको रूप तालिका देखाइएको छ ।

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | लता | लते | लता: |
| द्वितीया | लताम् | लते | लता: |
| तृतीया | लतया | लताभ्याम् | लताभि: |
| चतुर्थी | लतायै | लताभ्याम् | लताभ्य: |
| पञ्चमी | लताया: | लताभ्याम् | लताभ्य: |
| षष्ठी | लताया: | लतयो: | लतानाम् |
| सप्तमी | लतायाम् | लतयो: | लतासु |
| सम्बोधन | हे लते | हे लते | हे लता: |

यस्तै - बाला, कन्या, निशा, कला, राधा, सीता, माला, प्रजा, समस्या, भार्या इत्यादि शब्दहरूका रूप बन्छन् ।

विंशः पाठः

# अजन्तस्त्रीलिङ्गप्रकरणम्

(नदीसंज्ञासूत्रम्)

सूत्र-११८ यूस्त्र्याख्यौ नदी १।४।३

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः।

(ईकारान्तानाम् ऊकारान्तानां च नित्यस्त्रीलिङ्गवाचिनां शब्दानां स्त्रीलिङ्गे नदीसंज्ञा भवति। यथा - नदी, गौरी, वधू, इत्यादयः।)

(ईकारान्तस्त्रीलिङ्गशब्दनिरूपणम्)

**गौरी** - गौरीशब्दात् प्रथमाया एकवचने सुविभक्तौ अनुबन्धलोपे गौरी + स्' इति स्थिते अपृक्तसंज्ञायां 'हल्ङ्याब्भ्यो दीर्घात्-०' इति सूत्रेण सकारलोपे 'गौरी' इति भवति। प्रथमाया द्विवचने औ विभक्तौ 'गौरी + औ' इति स्थिते 'इको यणचि' इति सूत्रेण यणादेशे गौर्यौ' इति भवति। प्रथमाया बहुवचने 'जस्' विभक्तौ अनुबन्धलोपे 'गौरी + अस्' इत्यत्र यणि सकारस्य रुत्वे विसर्गे 'गौर्यः' इति भवति।

(ह्रस्वविधिसूत्रम्)

सूत्र-११९ अम्बार्थनद्योर्ह्रस्वः ७।२।१०७

सम्बुद्धौ।

(अम्बा=माता तदर्थकानां नदीसंज्ञकानां च अङ्गस्य ह्रस्वो भवति सम्बुद्धिसंज्ञके 'सु' प्रत्यये परे। यथा - 'गौरी' शब्दात् सम्बोधने प्रथमाया एकवचने 'सु' प्रत्यये अनुबन्धलोपे 'हे गौरी + स्' इति जाते 'एकवचनं सम्बुद्धिः' इति सकारस्य सम्बुद्धिसंज्ञायां 'यूस्त्र्याख्यौ नदी' इति सूत्रेण गौरीशब्दस्य नदीसंज्ञायाम्' अनेन सूत्रेण ह्रस्वे 'हे गौरि + स्' इति स्थिते 'एङ्ह्रस्वात्०' इति

सकारलोपे 'हे गौरि' इति भवति । 'द्विवचने हे गौर्यौ, बहुवचने हे गौर्यः, इति प्रथमाया द्विवचनबहुवचनवत् ।

द्वितीया-विभक्तौ एकवचने 'अम्' प्रत्यये 'अमिपूर्वः' इति पूर्वरूपे 'गौरीम्' इति, द्विवचने -'औट्' प्रत्यये अनुबन्धलोपे यणि 'गौर्यौ' इति, बहुवचने 'शस्' विभक्तौ अनुबन्धलोपे पूर्वसवर्णदीर्घे रुत्वे विसर्गे 'गौरीः' इति च रूपाणि भवन्ति । तृतीयाया एकवचने 'टा' विभक्तौ अनुबन्धलोपे यणि 'गौर्या' इति, द्विवचने 'गौरीभ्याम्' इति बहुवचने 'गौरीभिः' इति च रूपाणि भवन्ति ।)

(आडागमविधिसूत्रम्)

११ ५१

**सूत्र-१२० आण्नद्याः ७ । ३ । ११२**

**नद्यन्तात् परेषां ङितामाडागमः ।**

(नदीसंज्ञकात् परे विद्यमानानां ङिद्वचनानाम् (ङे, ङसि, ङस्, ङि प्रत्ययानाम्) आडागमो भवति । यथा - गौरीशब्दात् चतुर्थ्या एकवचने 'ङे' विभक्तौ अनुबन्धलोपे 'गौरी + ए' इति स्थिते नदीसंज्ञायाम् 'आण्नद्याः' इति सूत्रेण 'आड्' आगमे अनुबन्धलोपे 'गौरी आ + ए' इति भवति ।)

(वृद्धिविधिसूत्रम्)

५१ ०

**सूत्र-१२१ आटश्च ६ । १ । ९०**

**आटोऽचि परे वृद्धिरेकादेशः ।**

(आट आकाराद् अचि परे पूर्वपरयोः (आकारस्य अचश्च) स्थाने वृद्धिरेकादेशो भवति । यथा - 'गौरी आ + ए' इत्यत्र आकारस्य एकारस्य च स्थाने अनेन सूत्रेण वृद्धौ 'गौरी + ऐ' इति स्थिते 'इको यणचि' इति यणादेशे 'गौर्यै' इति भवति ।

चतुर्थी - द्विवचन- बहुवचनयोः गौरीभ्याम्, गौरीभ्यः इति । पञ्चम्या एकवचने 'ङसि' प्रत्यये अनुबन्धलोपे 'गौरी + अस्' इति स्थिते नदीसंज्ञायाम् 'आण्नद्याः' इति आडागमे अनुबन्धलोपे 'गौरीआ + अस्' इति जाते आटश्च' इति वृद्धौ 'गौरी + आस्' इति स्थिते यणि सकारस्य रुत्वे विसर्गे 'गौर्याः' इति, द्विवचनबहुवचनयोः गौरीभ्याम्, 'गौरीभ्यः' इति । षष्ठ्या एकवचने 'ङस्' विभक्तौ गौर्याः' इति, द्विवचने 'ओस्' विभक्तौ 'गौरी + ओस्' इति स्थिते यणादेशे रुत्वे विसर्गे 'गौर्योः' इति, बहुवचने 'आम्' विभक्तौ 'गौरी + आम्' इति स्थिते नदीसंज्ञायां 'ह्रस्वनद्यापो नुट्' इति सूत्रेण नुडागमे अनुबन्धलोपे णत्वे 'गौरीणाम्' इति । सप्तम्या एकवचने 'ङि' प्रत्यये अनुबन्धलोपे 'गौरी + इ' इति स्थिते नदीसंज्ञायां 'ङेराम्नद्याम्नीभ्यः' इति 'आम्' आदेशे 'गौरी + आम्' इति जाते यणादेशो 'गौर्याम्' इति द्विवचने 'ओस्' प्रत्यये षष्ठी द्विवचनवद् 'गौर्योः' इति, बहुवचने 'सुप्' प्रत्यये अनुबन्धलोपे षत्वे 'गौरीषु' इति च रूपाणि सिद्ध्यन्ति ।)

## अभ्यासः

१. **गौरीशब्दात् ङे - ङसि- ङस् - ङि विभक्तिषु आडागमादौ स्थिति - तालिका**

| विभक्तौ | आडागमे | वृद्धौ | यणादेशे |
|---|---|---|---|
| ङे | गौरी + आ + ए | गौरी + ऐ | गौर्यै |
| ङसि, ङस् | गौरी+आ+अस् | गौरी + आस् | गौर्यास् (रुत्वे विसर्गे) गौर्याः |
| ङि | गौरी + आ + आम् ('ङेराम्') | गौरी + आम् | गौर्याम् |

एवम्- नदी, पृथिवी, पार्वती, कुमारी, देवी, वाणी नारी, जानकी, राज्ञी, देवकी, सावित्री इत्यादयः शब्दाः सिद्ध्यन्ति ।

२. नदीशब्दस्य सर्वासु विभक्तिषु रूपाणि

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुचनम् |
|---|---|---|---|
| प्रथमा | नदी | नद्यौ | नद्यः |
| द्वितीया | नदीम् | नद्यौ | नदीः |
| तृतीया | नद्या | नदीभ्याम् | नदीभिः |
| चतुर्थी | नद्यै | नदीभ्याम् | नदीभ्यः |
| पञ्चमी | नद्याः | नदीभ्याम् | नदीभ्यः |
| षष्ठी | नद्याः | नद्योः | नदीनाम् |
| सप्तमी | नद्याम् | नद्योः | नदीषु |
| सम्बोधनम् | हे नदि | हे नद्यौ | हे नद्यः |

## अभ्यासार्थ प्रश्नाः

१. **अधोलिखितानां प्रश्नानाम् उत्तराणि दत्त –**

(क) 'अम्बार्थनद्योर्ह्रस्वः' इति सूत्रेण कस्य ह्रस्वो भवति ?

(ख) 'यूस्त्र्याख्यौ नदी' इति सूत्रेण कीदृशानाम् इकारान्तानाम् उकारान्तानां च नदी संज्ञा भवति ?

(ग) 'आण्नद्याः' इति सूत्रेण कस्य आडागमः ?

(घ) 'गौरी + ऐ' इति स्थिते किं भवति ?

(ङ) 'आटश्च' इति सूत्रेण किं भवति ?

२. **अधोलिखितेषु पदेषु विभक्तिं निर्दिशत –**

गौरीः, गौर्याः, नद्याम्, नदीनाम् ।

३. **अधोलिखितान् प्रयोगान् साधयत –**

गौर्याः गौर्यै, गौरीणाम्, गौर्याम् ।

४. अधोलिखितानां सूत्राणां नेपालीभाषायाम् अर्थ लिखत

(क) अम्बार्थनद्योर्ह्रस्वः

(ख) आण्नद्याः

(ग) यूस्त्र्याख्यौ नदी

५. रिक्तस्थानं पूरयत –

(क) 'अम्बार्थनद्योर्ह्रस्वः' इति सूत्रेण ........................................ गुणो भवति । (नदीसंज्ञकस्य, नदीशब्दस्य)

(ख) 'यूस्त्र्याख्यौ नदी' इति सूत्रेण ............. नदीसंज्ञा भवति । (स्त्रीशब्दस्य नित्यस्त्रीलिङ्गस्य)

(ग) 'आण्नद्याः' इति सूत्रेण ............ आडागमः । (नदीसंज्ञकस्य, ङिद्वचनस्य)

(घ) 'गौरी + आ + ए' इति स्थिते ................................ इति सूत्रेण वृद्धिरेकादेशः । (वृद्धिरेचि, आटश्च)

(ङ) 'गौरी + अस्' इति स्थिते .................. इति सूत्रेण नदीसंज्ञायां ............ इति सूत्रेण आडागमे अनुबन्धलोपे .................. इति सूत्रेण वृद्धौ सकारस्य रुत्वे विसर्गे ........................ इति रूपं सिद्धम् ।

६. शुद्धकथने (√) चिह्नम् अशुद्धे च (x) चिह्नं दर्शयत –

(क) 'यूस्त्र्याख्यौ' नदी इति सूत्रेण नदी संज्ञा भवति । ( )

(ख) दीर्घ- इकारान्तस्य दीर्घ - उकारान्तस्य नदी संज्ञा भवति । ( )

(ग) 'आण्नद्याः' इति सूत्रेण अचि परे आडागमः । ( )

(घ) 'आटश्च' इति सूत्रेण आटोऽचि परे वृद्धिर्भवति । ( )

(ङ) 'गौरीणाम्' इत्यत्र नुडागमः भवति । ( )

७. गौरी, भगिनीशब्दयोः सर्वासु विभक्तिषु रूपाणि लिखत ।

## विशेष अभ्यास

१. अजन्तस्त्रीलिङ्गी शब्दहरूमा ऋकारान्त शब्दहरूको रूपसिद्धि पुंल्लिङ्गी शब्द जस्तै हुन्छ 'शस्' विभक्तिमा मात्र रूप भिन्नै हुन्छ । जस्तै - मातृ शब्दको रूप माता मातरौ मातरः मातरम्, मातरौ मातॄः इत्यादि । यस्तै स्वसृ शब्दको पनि रूप - स्वसा स्वसारौ स्वसारः, स्वसारम् स्वसारौ स्वसॄः आदि हुन्छन् ।

२. पितृ शब्दको रूपसिद्धिक्रम अनुसार मातृ शब्दको सम्पूर्ण रूप तालिका बनाई अभ्यास गर्नु उपयुक्त हुन्छ ।

## शब्दार्थ

गौरी = पार्वती (आठ वर्षकी कन्या) ।

पृथिवी = संसार, जमिन ।

राज्ञी = रानी ।

वाणी = बोली, वचन, सरस्वती देवी ।

देवकी = कृष्ण भगवान्‌की आमा ।

सावित्री = देवी ।

गायत्री = मन्त्र ।

## एकविंशः पाठः अजन्तनपुंसकलिङ्गप्रकरणम्

(अमादेशविधिसूत्रम्)

सूत्र-१२२ **अतोऽम्** ७ । १ । २४

**अतोऽङ्गात् क्लीबात् स्वमोरम् ।**

(ह्रस्वाकारान्ताद् नपुंसकलिङ्गे विद्यमानाद् अङ्गात् परस्य 'सु' प्रत्ययस्य 'अम्' प्रत्ययस्य च स्थाने 'अम्' आदेशः स्यात् । यथा - 'ज्ञान' शब्दात् प्रथमाया एकवचने 'सु' प्रत्यये अनुबन्धलोपे 'अतोऽम्' इति सूत्रेण 'अम्' आदेशे 'ज्ञान + अम्' इति जाते 'अमि पूर्वः' इति सूत्रेण पूर्वरूपे ज्ञानम् इति भवति । )

('शी' आदेशविधिसूत्रम्)

सूत्र-१२३ **नपुंसकाच्च** ७ । १ । १९

**क्लीबादौङः शी स्यात् ।**

(नपुंसकाद् अङ्गात् परस्य 'औ' प्रत्ययस्य 'औट्' प्रत्ययस्य च स्थाने 'शी' आदेशः स्यात् । यथा- ज्ञानशब्दात् प्रथमाया द्विवचने 'औ' विभक्तौ 'ज्ञान + औ' इति जाते 'नपुंसकाच्च' इति सूत्रेण 'शी' आदेशे शकारस्य 'लशक्वतद्धिते' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इति लोपे 'ज्ञान + ई' इति जाते 'आद् गुणः' इति गुणे 'ज्ञाने' इति भवति ।)

('शि' आदेशविधिसूत्रम्)

सूत्र-१२४ **जश्शसोः शिः** ७ । १ । २०

क्लीबादनयोः शिः स्यात् ।

(नपुंसकाद् अङ्गात् परस्य 'जस्' प्रत्ययस्य 'शस्' प्रत्ययस्य च स्थाने 'शि' आदेश: स्यात् । यथा - ज्ञानशब्दात् प्रथमाया बहुवचने 'जस्' विभक्तौ जकारस्य इत्संज्ञायां लोपे च 'ज्ञान + अस्' इति जाते 'जश्शसो: शि' इति सूत्रेण 'शि' आदेशे अनुबन्धलोपे 'ज्ञान + इ' इति भवति ।)

**(सर्वनामस्थानसंज्ञासूत्रम्)**

११ ११
सूत्र-१२५ **शि सर्वनामस्थानम् १ । १ । ४२**

**'शि' इत्येतदुक्तसंज्ञं स्यात् ।**

('शि' इत्यस्य सर्वनामस्थानसंज्ञा भवति ।)

**('नुम्' आगमविधिसूत्रम्)**

६१ ६१
सूत्र-१२६ **नपुंसकस्य झलच: ७ । १ । ७२**

**झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ।**

(झलन्तस्य अजन्तस्य नपुंसकलिङ्गस्य 'नुमागम: स्यात् सर्वनामस्थाने परे । नुमागमे उकारस्य मकारस्य च इत्संज्ञायां लोपे च 'न्' इत्यस्य शेष: ।)

**('मिद्' आगमविषये व्यवस्थापकं सूत्रम्)**

११ ६१ ५१ ११
सूत्र-१२७ **मिदचोऽन्त्यात् पर: १ । १ । ४७**

**अचां मध्ये योऽन्त्यस्तस्मात् परस्तस्यैवान्तावयवो मित् स्यात् ।**

(अचां मध्ये य: अन्त्य: अच् तस्मात् पर: तस्य समुदायस्य अवयव: मिदागमो भवति । यथा - 'ज्ञान + इ' इत्यत्र 'नपुंसकस्य झलच: इति सूत्रेण नुमागमे मकारस्य इत्संज्ञायां नुमागमस्य मित्त्वात् 'ज्ञान' इत्यस्यानन्तरं भवतीति बोधनात् 'ज्ञानन् + इ' इति जाते 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रेण उपधादीर्घे वर्णसम्मेलने 'ज्ञानानि' इति भवति ।

द्वितीयाविभक्तौ - एकवचने 'ज्ञान + अम्' इत्यत्र 'अमि पूर्वः' इति पूर्वरूपे 'ज्ञानम्' इति, द्विवचने 'औट्' विभक्तौ प्रथमाद्विवचनवद् 'ज्ञाने' इति, बहुवचने 'शस्' विभक्तौ अनुबन्धलोपे 'जश्शसोः शिः' इति 'शि' आदेशे नुमागमे दीर्घे 'ज्ञानानि' इति च रूपाणि भवन्ति । तृतीयादिषु विभक्तिषु रामशब्दवद् रूपाणि भवन्ति ।)

## अभ्यासः

१. **नपुंसकलिङ्गे प्रथमा-विभक्तौ द्वितीया-विभक्तौ च समानानि रूपाणि भवन्ति ।**

२. **अकारान्तानां नपुंसकलिङ्गे विद्यमानानाम् अन्येषां शब्दानाम् अपि रूपाणि भवन्ति । केचन शब्दा यथा-गृह-धन-वन-जल-पत्र-कुल-स्थान-पुस्तक-फल-मुख- कमल-गगने-त्यादयः ।**

३. **प्रयोगसाधनप्रकार :**

ज्ञानानि - ज्ञानशब्दात् प्रातिपदिकात् प्रथमाया बहुवचने 'जस्' विभक्तौ अनुबन्धलोपे 'ज्ञान + अस्' इति जाते 'जश्शसोः शिः' इति सूत्रेण 'शि' आदेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सूत्रेण सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति सूत्रेण नुमागमे अनुबन्धलोपे 'ज्ञान न् + इ' इति जाते' 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रेण उपधादीर्घे वर्णसम्मेलने 'ज्ञानानि' इति रूपं सिद्धम् ।

४. ज्ञानशब्दस्य रूपतालिका –

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ज्ञानम् | ज्ञाने | ज्ञानानि |
| द्वितीया | ज्ञानम् | ज्ञाने | ज्ञानानि |
| तृतीया | ज्ञानेन | ज्ञानाभ्याम् | ज्ञानैः |
| चतुर्थी | ज्ञानाय | ज्ञानाभ्याम् | ज्ञानेभ्यः |
| पञ्चमी | ज्ञानात् | ज्ञानाभ्याम् | ज्ञानेभ्यः |
| षष्ठी | ज्ञानस्य | ज्ञानयोः | ज्ञानानाम् |
| सप्तमी | ज्ञाने | ज्ञानयोः | ज्ञानेषु |
| सम्बोधनम् | हे ज्ञान ! | हे ज्ञाने | हे ज्ञानानि |

## अभ्यासार्थं प्रश्नाः

**१. अधो लिखितानां प्रश्नानामुत्तराणि लिखत –**

(क) 'अतोऽम्' इति सूत्रं कस्य स्थाने किं करोति ?

(ख) 'ज्ञान + अम्' इत्यत्र केन सूत्रेण किं कार्यं भवति ?

(ग) 'नुम्' आगमः कुत्र भवति ?

(घ) 'नपुंसकाच्च' इति सूत्रं किं करोति ?

(ङ) 'शि' इत्यस्य सर्वनामस्थानसंज्ञा केन सूत्रेण भवति ?

(च) 'औङ्' पदेन कयोः प्रत्यययोः ग्रहणं भवति ?

**२. अधो लिखितानां सूत्राणाम् अर्थं लिखत –**

(क) नपुंसकाच्च

(ख) शि सर्वनामस्थानम्

(ग) नपुंसकस्य झलचः

३. अधो निर्दिष्टेषु शब्देषु विभक्तिवचने निर्दिशत

ज्ञानानि, फलैः, वनस्य, पुस्तकेषु, पत्राणि।

४. अधो लिखितान् प्रयोगान् साधयत -

ज्ञाने, फलम्, पुस्तकानि, वनस्य।

५. रिक्तस्थानं पूरयत -

(क) 'अतोऽम् इति सूत्रेण ................ भवति। ('अम्' आदेशः, 'नुम्' आगमः)

(ख) 'औ' इत्यस्य स्थाने 'शी' विधायकं सूत्रम् ................। (नपुंसकाच्च, जश्शसोःशिः)

(घ) 'नपुंसकस्य झलचः' इति सूत्रेण ............. भवति। ('शी' आदेशः, नुमागमः)

(ङ) ज्ञानशब्दात् प्रथमाया द्विवचने .............. विभक्तौ .................... इति सूत्रेण 'शी' आदेशे अनुबन्धलोपे 'ज्ञान + ई' इति जाते .................. इति सूत्रेण गुणे ............. इति रूपं सिद्धम्।

६. अधो लिखितेषु शुद्धवाक्येषु (√) चिह्नम् अशुद्धेषु च (x) चिह्नं दर्शयत -

(क) 'ज्ञान + सु' इत्यत्र 'अम्' आदेशो भवति। ( )

(ख) 'अतोऽम्' इति सूत्रेण पूर्वरूपं भवति। ( )

(ग) ज्ञानशब्दस्य चतुर्थ्या एकवचने 'ज्ञानाय' इति भवति। ( )

(घ) वनशब्दस्य धनशब्दस्य च रूपाणि समानानि भवन्ति। ( )

(ङ) 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रेण उपधाया दीर्घो भवति। ( )

(च) पत्रशब्दस्य प्रथमाबहुवचने 'पत्राणि' इति रूपं भवति। ( )

७. ज्ञानशब्दवत् पुस्तकशब्दस्य जलशब्दस्य च सर्वासु विभक्तिषु रूपाणि दर्शयत।

## विशेष अभ्यास

१. 'म्' को इत्संज्ञा हुने आगम जसलाई हुने हो त्यसको अन्त्य 'अच्' भन्दा पर (अगाडि) हुन्छ । जस्तै - 'ज्ञान' शब्दबाट 'नुम्' आगम गर्दा 'न' पछिका अकारभन्दा पर हुन्छ । 'ट्' को इत्संज्ञा हुने आगम जसलाई हुने हो त्यसको आदिमा हुन्छ । जस्तै 'राम + आम्' यहाँ 'ह्रस्वनद्यापो नुट्' ले 'नुट्' आगम हुँदा 'आम्' भन्दा पहिले हुन्छ 'राम + नाम्' यस्तो बन्छ ।

२. अकारान्त नपुंसकलिङ्गी शब्दहरूको रूपसिद्धिप्रकार तृतीयादेखि सप्तमी विभक्तिसम्म अकारान्तपुल्लिङ्गी शब्दहरू जस्तै हुन्छ । त्यसैले ती शब्दको रूप सिद्ध गर्दा अकारान्त पुल्लिङ्गी शब्द रूप सिद्ध गर्ने सूत्रहरूकै उपयोग यहाँ पनि गर्नुपर्दछ ।

## शब्दार्थ

कुलम् = कुल, खानदान

ज्ञानम् = ज्ञान

धनम् = धन (सम्पत्ति)

स्थानम् = ठाउँ

मुखम् = मुख

कमलम् = कमलको फूल

गगनम् = आकाश

**द्वाविंशः पाठः**

# अजन्तनपुंसकलिङ्गप्रकरणम्

(लोपविधिसूत्रम्)

**सूत्र-१२८ स्वमोर्[६।२]नपुंसकात्[५।१] ७। १। २३**

**लुक् स्यात्।** वारि।

(नपुंसकात् परयोः सु-अम्-प्रत्यययोः लुक् (अदर्शनम्) भवति। यथा - वारि शब्दात् प्रथमाया एकवचने सु-विभक्तौ 'स्वमोर्नपुंसकात्' इति सूत्रेण सु-प्रत्ययस्य लुकि - 'वारि' इति भवति। एवम् - वारि - शब्दात् द्वितीयाया एकवचने 'अम्-' विभक्तौ, तस्य अनेनैव सूत्रेण लुकि 'वारि' इति रूपम् भवति।)

(नुमागमविधिसूत्रम्)

**सूत्र-१२९ इको[६।१]ऽचि[७।१] विभक्तौ[७।१] ७। १। ७३**

**इगन्तस्य नुम् अचि विभक्तौ।** वारिणी। वारीणि

(अजादौ विभक्तौ परे इगन्तस्य नपुंसकस्य अङ्गस्य नुम्-आगमो भवति। यथा- 'वारि + औ' इत्यत्र 'औ' इत्यस्य 'शी-' आदेशे- 'वारि + ई' इति, अत्र इगन्तम् अङ्गं 'वारि' इति, तस्य नुमागमे उकार-मकारयोः लोपे - 'वारिन् + ई' इति जाते वर्णसम्मेलने 'अट्कुप्वाङ् ०- इति नस्य णत्वे-वारिणी इति। बहुवचने जसि- 'जश्शसोः शि' इति शि-आदेशे-' वारि+इ' इति स्थिते 'इकोऽचि०- 'इति नुमागमेऽनुबन्धलोपे' 'वारिन्+इ' इति जाते सर्वनामस्थान-संज्ञायाम् 'सर्वनामस्थाने०-' इति उपधादीर्घे वर्णसम्मेलने, णत्वे-वारीणि-इति रूपम्। एवम्-द्वितीयायामपि-वारि, वारिणी, वारीणि-इति रूपाणि भवन्ति।)

तृतीयाया एकवचने -'वारि + आ' इति स्थिते 'आङोनाऽस्त्रियाम्' इति 'ना' - आदेशे, णत्वे - वारिणा इति। चतुर्थ्या एकवचने - 'वारि + ए' इति स्थिते घिसंज्ञायां 'घेर्ङिति' इति गुणे प्राप्ते -

(पूर्वविप्रतिषेधवार्तिकम्)

**वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन -**

वृद्धि - औत्व - तृज्वद्भाव - गुणेषु प्राप्तेषु तुल्यबलविरोधे सति पूर्वस्य बलवत्त्वाद् 'नुम्' भवति यथा - 'वारि + ए' इत्यत्र उक्त - वार्तिक - सहकृतेन 'इकोऽचि' इति नुमागमे 'वारिन् + ए' इति जाते घिसंज्ञाया अभावे गुणो न भवति। तेन - वर्णसम्मेलने णत्वे - 'वारिणे' इति रूपम्।

तृतीया - द्विवचने - वारिभ्याम्, बहुवचने - वारिभिः। चतुर्थ्या - द्विवचने - वारिभ्याम्, बहुवचने - वारिभ्यः। पञ्चम्या एकवचने - वारिणः, द्विवचने - वारिभ्याम्, बहुवचने - वारिभ्यः। षष्ठ्या एकवचने - वारिणः, द्विवचने - वारिणोः इति। बहुवचने - 'वारि + आम्' इत्यत्र'

(पूर्वविप्रतिषेधवार्तिकम्)

**नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन -**

(नुमागमः, अचि परे रभावः, तृज्वद्भाव एतेषु प्राप्तेषु नुडागमेऽपि प्राप्ते, तुल्यबलविरोधे सति पूर्वविप्रतिषेधेन (पूर्वशास्त्रस्य - बलवत्वेन) नुडागमो भवति। तेन - अत्र एतद्-वार्तिक-सह-कृतेन 'ह्रस्वनद्यापः-०' इति नुडागमे 'नामि' इति दीर्घे - 'वारीणाम्' इति भवति।) सप्तम्या एकवचने - वारिणि, द्विवचने - वारिणोः, बहुवचने - वारिषु। सम्बोधने - 'ह्रस्वस्य गुणः' इति सूत्रेण गुणपक्षे-हे वारे इति, गुणाभावे-हे वारि इति, एकवचने। द्विवचनबहुवचनयोः हे वारिणी, हे वारीणि इति भवतः।)

दधि-शब्दस्यापि प्रथमा - द्वितीययोः वारिशब्दवद्रूपाणि भवन्ति। यथा- दधि, दधिनी, दधीनि इति। तृतीयादौ अजादौ विभक्तौ तु-

### (अनङ्आदेशविधिसूत्रम्)

६।३ १।१ १।१

**सूत्र-१३० अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७ । १ । ७५**

**एषामनङ् स्यात् टादावचि ।**

(अजादिषु तृतीयादिषु विभक्तिषु परेषु, अस्थि-दधि-सक्थि-अक्षि-शब्दानाम् 'अनङ्' आदेशः स्यात् । 'अनङ्' इत्यत्र ङकार इत्संज्ञकः, नकाराद् अकार उच्चारणार्थः, अतः 'अन्' इति भवति । यथा - दधि - शब्दात् तृतीयाया एकवचने - 'दधि + आ' इति स्थिते अस्थिदधि .... इति सूत्रेण इकारस्य स्थाने अनङादेशे 'दधन् + आ' इति जाते -)

### (अलोपविधिसूत्रम्)

१।१ ६।१

**सूत्र-१३१ अल्लोपोऽनः ६ । ४ । १३४**

**अङ्गावयवोऽसर्वनामस्थान-यजादि-स्वादिपरो योऽन्, तस्याऽकारस्य लोपः ।**

दध्ना । दध्ने । दध्नः २ । दध्नोः ।

(सर्वनामस्थानभिन्ने यकारादौ अजादौ प्रत्यये परे, पूर्वस्य अङ्गावयवस्य 'अन्' - इत्यस्य अकारस्य लोपो भवति । यथा- 'दधन् + आ' इत्यत्र 'आ' इति सर्वनामस्थानभिन्नः अजादिप्रत्ययः, तस्मिन् परे पूर्वः अङ्गसंज्ञकः 'दधन्' इति तस्य अवयवः 'अन्' वर्तते, अतः तस्य अकारस्य अल्लोपोऽनः इति सूत्रेण लोपे, वर्णसम्मेलने-दध्ना इति भवति । चतुर्थ्या एकवचने-अनङि - 'दधन्+ ए' इति स्थिते पूर्वसूत्रेण अकारलोपे - 'दध्ने' इति भवति । पञ्चम्याः षष्ठ्याश्च एकवचने - अनङि 'दधन् + अस्' इति स्थिते अनेन अकारलोपे, वर्णसम्मेलने सकारस्य रुत्वे विसर्गे च दध्नः इति रूपम् । षष्ठी-सप्तम्योः द्विवचने - अनङि 'दधन् + ओस्' इत्यत्र अनेन अकारलोपे वर्णसम्मेलने सस्य रुत्वे विसर्गे 'दध्नोः' इति ।)

सप्तम्येकवचने - अनङि 'दधन् + इ' इति स्थिते-

(अलोपविधिसूत्रम्)

सूत्र-१३२ विभाषा ङिश्योः ६ । ४ । १३६

**अङ्गावयवोऽसर्वनामस्थानपरो योऽन्, तस्याकारस्य लोपो वा स्यात्, ङिश्योः परयोः ।** दध्नि दधनि । शेषं वारिवत् ।

(सर्वनामस्थानप्रत्यये परे पूर्वः यः अङ्गावयवः 'अन्' तस्य अकारस्य वैकल्पिकः लोपः स्यात्, ङि-प्रत्यये, शि-प्रत्यये च परे । यथा - 'दधन् + इ' इत्यत्र 'ङि' - प्रत्यये परे पूर्वस्य 'अन्' - इत्यस्य अकारस्य वैकल्पिके लोपे वर्णसम्मेलने - 'दध्नि' इति, लोपाभावे-'दधनि' इति रूपद्वयम् । हलादौ विभक्तौ तु- वारिशब्दवद् रूपाणि भवन्ति ।)

## अभ्यासः

**रूपसिद्धिप्रकार :**

**वारीणि** - प्रातिपदिकसंज्ञकाद् वारिशब्दात् प्रथमाया बहुवचने जसि, अनुबन्धलोपे 'वारि + अस्' इति स्थिते 'जश्शसोः शि' इति 'शि' - आदेशेऽनुबन्धलोपे तस्य 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायाम् 'इकोऽचि विभक्तौ' इति नुमागमेऽनु-बन्धलोपे 'वारिन् + इ' इति जाते 'सर्वनामस्थाने-०' इति उपधादीर्घे नस्य णत्वे वर्णसम्मेलने - वारीणि इति सिद्धम् ।

**वारीणाम्** - प्रातिपदिकाद् वारिशब्दात् षष्ठ्या बहुवचने 'आमि' 'वारि + आम्' इति स्थिते 'इकोऽचि-०' इतिसूत्रेण नुमि प्राप्ते 'ह्रस्वनद्यापः-०' इति सूत्रेण 'नुटि' च प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति वार्तिकबलेन 'ह्रस्वनद्यापः-०' इति नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे, नकारस्य णत्वे - 'वारीणाम्' इति सिद्धम् ।

**दध्ना** - प्रातिपदिकाद् दधि-शब्दात् तृतीयैकवचने टा-विभक्तौ अनुबन्धलोपे 'दधि + आ' इति स्थिते 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति इकारस्य अनङि अनुबन्धलोपे

'दधन्+आ' इति जाते 'अल्लोपोऽनः' इति अकारलोपे वर्णसम्मेलने 'दध्ना' इति रूपं सिद्धम् । **दध्नि, दधनि** इति - दधि- शब्दात् प्रातिपदिकात् सप्तम्येकवचने ङि-विभक्तौ अनुबन्धलोपे 'दधि + इ' इति स्थिते 'अस्थिदधिस- कथ्यक्ष्णामनङुदात्तः' इति अनङि अनुबन्धलोपे 'दधन् + इ' इति जाते 'विभाषा ङिश्योः' इति वैकल्पिके अकारलोपे वर्णसम्मेलने 'दध्नि' इति रूपम्, अकारलोपाभावे 'दधनि' इति च सिद्धयति ।

## अभ्यासार्थं प्रश्नाः

१. **शुद्धम् उच्चारयत -**

   (क) अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः

   (ख) अल्लोपोऽनः

   (ग) वृद्धयौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन

२. **अधो लिखितानां प्रश्नानामुत्तराणि दत्त**

   (क) 'स्वमोर्नपुंसकात्' इति सूत्रं किं करोति ?

   (ख) 'अजादौ' विभक्तौ परतः कस्य नुमागमः भवति ?

   (ग) 'वारि + अम्' इत्यत्र केन सूत्रेण किं भवति ?

   (घ) 'दधि' शब्दात् तृतीयाया एकवचने 'अनङ्' केन सूत्रेण भवति ?

   (ङ) 'वारि + नाम्' इत्यत्र केन सूत्रेण किं भवति ?

   (च) 'वारि' शब्दस्य चतुर्थीविभक्तौ रूपाणि लिखत

३. **अधो लिखितेषु शब्देषु विभक्तिवचने निर्दिशत -**

   वारिणी, दध्नः, वारीणाम्, दध्नाम् ।

४. **अधो लिखितानां प्रयोगाणां सिद्धिप्रक्रियां दर्शयत -**

   वारीणि, वारिणे, दध्नः, दध्नौ, वारीणाम् ।

५. रिक्तस्थानं पूरयत -

(क) 'वारि + सु' इति स्थिते .......... भवति। (सुप्रत्ययस्य लुक्, अम्-आदेशः)

(ख) 'इकोऽचि विभक्तौ' इति सूत्रेण .......................... नुमागमः भवति ।

(हलादौ विभक्तौ, अजादौ विभक्तौ)

(ग) 'दधि + आ' इत्यत्र ............ भवति। (अनङादेशः, ना-आदेशः)

(घ) 'वारि + आम्' इत्यत्र ............ भवति। (नुडागमः, नुमागमः)

(ङ) 'दधि' शब्दात् षष्ठ्या द्विवचने ................. विभक्तौ ....................... इति सूत्रेण अनङादेशे ..................... इति जाते ..................... इति सूत्रेण अकारलोपे ................. इति जाते सकारस्य रुत्वे विसर्गे च कृते ................. इति रूपं सिद्धम्।

६. दधिशब्दस्य सर्वासु विभक्तिषु रूपाणि लिखत।

७. परस्परं समूहे मेलयत -

| 'अ' समूहः | 'आ' समूहः |
|---|---|
| (क) स्वमोर्नपुंसकात् | (क) गुणः |
| (ख) ह्रस्वनद्यापो नुट् | (ख) अनङादेशः |
| (ग) ह्रस्वस्य गुणः | (ग) दीर्घः |
| (घ) अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः | (घ) स्वमोर्लुक् |
| (ङ) नामि | (ङ) नुडागमः |

## विशेष अभ्यास

१. ह्रस्व इकारान्त र ह्रस्व उकारान्त नपुंसकलिङ्गी शब्दहरूको रूप सिद्धि प्रक्रिया समान हुन्छ (**अस्थि**, **सक्थि**, **अक्षि**, **दधि** शब्द बाहेक)।

२. वारिशब्दको चतुर्थी एकवचनदेखि सप्तमी द्विवचनसम्म अजादि विभक्ति पर भएमा 'इकोऽचि विभक्तौ' सूत्रले 'नुम्' आगम हुन्छ ।

३. मधुशब्दको रूप सिद्धि 'वारि' शब्दजस्तै हुन्छ । यहाँ 'मधु' शब्दको रूप तालिका प्रदर्शित गरिएको छ -

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | मधु | मधुनी | मधूनि |
| द्वितीया | मधु | मधुनी | मधूनि |
| तृतीया | मधुना | मधुभ्याम् | मधुभिः |
| चतुर्थी | मधुने | मधुभ्याम् | मधुभ्यः |
| पञ्चमी | मधुनः | मधुभ्याम् | मधुभ्यः |
| षष्ठी | मधुनः | मधुनोः | मधूनाम् |
| सप्तमी | मधुनि | मधुनोः | मधुषु |
| सम्बोधन | हे मधु, हे मधो | हे मधुनी | हे मधूनि |

यस्तै- वस्तु, तालु, जानु, जतु, आदि शब्दहरूका रूप हुन्छन्।

## शब्दार्थ

वारि = पानी
मधु = मह
दधि = दही
अस्थि = हाड
जानु = घुँडा
जतु = लाहा
अक्षि = आँखा
सक्थि = जाँघ

त्रयोविंशः पाठः

# हलन्तपुंलिङ्गप्रकरणम्

**(हलन्तपुंल्लिङ्गशब्दनिरूपणम्)**

**(कादेशविधिसूत्रम्)**

सूत्र-१३३ **किमः[६१] कः[११] ७ । २ । १०३**

**किमः कः स्याद् विभक्तौ ।** कः, कौ, के इत्यादि । **शेषं सर्ववत् ।**

(किम् - शब्दस्य क-आदेशो भवति, विभक्तौ परे । यथा - किम् शब्दात् प्रथमाया एकवचने सु-विभक्तौ 'किमः कः' इति सूत्रेण 'किम्'-शब्दस्य 'क'-आदेशे 'क+स्' इति जाते सकारस्य रुत्वे विसर्गे - 'कः' इति । द्विवचने 'औ'-विभक्तौ अनेन सूत्रेण 'क-'आदेशे 'क+औ' इति स्थिते वृद्धौ - 'कौ' इति । बहुवचने 'जस्'- विभक्तौ अनेन सूत्रेण 'क-'आदेशे 'क+अस्' इति स्थिते 'जसः शी' इति 'शी-'आदेशे 'क + ई' इति जाते गुणे - 'के' इति रूपम् । एवं द्वितीयादिषु सर्वत्र 'किमः कः' इति सूत्रेण 'क' - आदेशे', ततः सर्वशब्दवत् कार्यम् ।)

**(अकारविधिसूत्रम्)**

सूत्र-१३४ **त्यदादीनामः[६१ ११] ७ । २ । १०२**

**एषामकारो विभक्तौ ।**

(त्यदादिगणे पठितानां शब्दानाम् अन्त्यस्य अकार आदेशो भवति, विभक्तौ परे । त्यदादिगणे पठिताः शब्दाः- **त्यद्, तद्, यद्, एतद् इदम्, अदस्, एक, द्वि**-इति सन्ति । तेन - इदम् - शब्दात् प्रथमाया एकवचने सु-विभक्तौ अनेन मकारस्य अत्वे प्राप्ते -)

(मकारविधिसूत्रम्)

६१ ११
सूत्र-१३५ **इदमो मः ७ । २ । १०८**

(इदम् - शब्दस्य मकारस्य मकार एव आदेशो भवति सु-विभक्तौ परे । अयं 'त्यदादीनामः' इत्यस्यापवादः । तेन -'इदम् + स्' इति स्थिते अनेन सूत्रेण अत्वं प्रबाध्य मकारस्य मकार एव आदेशः)

(अय्-आदेशविधिसूत्रम्)

६१ ११ ७१
सूत्र-१३६ **इदोऽय् पुंसि ८ । २ । १११**

**इदम इदोऽय् सौ पुंसि । अयम् ।**

(इदम् - शब्दस्य य 'इद्'-भागः तस्य 'अय्-' आदेशो भवति, सौ परे पुंल्लिङ्गे । यथा - 'इदम् + स्' इति स्थिते इद्-भागस्य अय्-आदेशे 'अय् अम् + स्' इति जाते 'हल्ङ्याब्भ्यः०- 'इति वर्णसम्मेलने सलोपे 'अयम्'इति रूपम् ।)

(पररूपविधिसूत्रम्)

६१ ७१
सूत्र-१३७ **अतो गुणे ६ । १ । ९७**

**अपदान्तादतो गुणे पररूपमेकादेशः ।**

(अपदान्तात् पदान्तभिन्नात् अकारात् गुणसंज्ञके (अ-ए-ओ एषु कस्मिन्नपि वर्णे) परे पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । यथा- इदम्-शब्दात् प्रथमाया द्विवचने औ-विभक्तौ- 'इदम् औ' इत्यत्र 'त्यदादीनामः' इति मकारस्य अत्वे 'इद + अ + औ' इति स्थिते 'अतो गुणे' इति सूत्रेण पररूपे- 'इद + औ' इति स्थितिः ।)

### (मकारादेशविधिसूत्रम्)

६१०

सूत्र-१३८ **दश्च** ७ । २ । १०९

**इदमो दस्य मः स्याद् विभक्तौ ।** इमौ, इमे ।

(इदम् -शब्दस्य यः दकारः तस्य स्थाने मकार आदेशः स्याद् विभक्तौ परे । यथा- 'इद + औ' इत्यत्र अनेन सूत्रेण दकारस्य मकारादेशे 'इम + औ' इति जाते 'वृद्धिरेचि' इति वृद्धौ 'इमौ' इति रूपम् ।

'इदम्'-शब्दात् प्रथमाया बहुवचने जसि- 'इदम् + अस्' इति स्थिते 'त्यदादीनामः' इति अत्वे 'इद + अ + अस्' इति जाते 'अतो गुणे' इति पररूपे 'इद + अस्' इत्यवस्थायां 'दश्च' इति दकारस्य मकारे 'इम + अस्' इति जाते सर्वनामस्थानसंज्ञायां 'जसःशी' इति 'शी'-आदेशेऽनुबन्धलोपे 'इम+ई' इति स्थिते गुणे - 'इमे' इति रूपम ।

त्यदादेः सम्बोधनं न भवति । द्वितीयाया एकवचने- 'इदम् + अम्' इत्यत्र अत्वे, पररूपे, मत्वे - 'इम + अम्' इति जाते पूर्वरूपे - 'इमम्' इति रूपम् । द्विवचने - 'इमौ' इति पूर्ववत् । बहुवचने शसि-अत्वे पररूपे, मत्वे 'इम + अस्' इत्यत्र पूर्वसवर्णदीर्घे 'तस्माच्छसो नः पुंसि'- इति सस्य नत्वे- 'इमान्' इति रूपम् ।)

### (अन् - आदेशविधिसूत्रम्)

७१ ६१

सूत्र-१३९ **अनाप्यकः** ७ । २ । ११२

**अककारस्येदम इदोऽन् आपि विभक्तौ ।** अनेन ।

(ककाररहितस्य इदम्-शब्दस्य यः'इद्-' भागः तस्य 'अन्'- आदेशो भवति, आपि विभक्तौ परे । 'आप्' इति प्रत्याहारः, स च तृतीयैकवचनात् 'टा'-इति आकारात् सप्तमी - बहुवचने 'सुप्'-इति पकारपर्यन्तं भवति । यथा - अत्र

तृतीयैकवचने 'टा-'विभक्तौ 'इदम्+आ' इति स्थिते अत्वे पररूपे 'इद+आ' इति जाते 'दश्च' इति मत्वे प्राप्ते तत् प्रबाध्य 'अनाप्यकः' इति सूत्रेण 'इद्' भागस्य 'अन्-' आदेशे 'अन + आ' इति, ततः 'टाङसिङसामिनात्स्याः' इति सूत्रेण इनादेशे 'अन + इन' इति स्थिते गुणे - 'अनेन' इति रूपम् ।) तृतीया-द्विवचने - अत्वे, पररूपे 'इद + भ्याम्' इति स्थिते - 'अनाप्यकः' इति सूत्रेण अनादेशे प्राप्ते तं प्रबाध्य -

**(लोपविधिसूत्रम्)**

सूत्र-१४० **हलि लोपः ७ । २ । ११३**

**अककारस्य इदम इदो लोप आपि हलादौ ।**

(ककाररहितस्य इदम्-शब्दस्य 'इद्'-भागस्य लोपो भवति, आपि हलादौ (हल्वर्ण आदौ यस्य तस्याम्) विभक्तौ परे यथा- 'इद + भ्याम्' इत्यत्र अनेन सूत्रेण 'इद्'- भागस्य लोपे 'अ+भ्याम्' इति जाते 'सुपि च' इति दीर्घे - 'आभ्याम्' इति रूपम् भवति । बहु-वचने - अत्वे, पररूपे, मत्वे प्राप्ते तत् प्रबाध्य अनेन सूत्रेण 'इद्'- भागस्य लोपे 'अ+ भिस्' इति स्थिते 'बहुवचने झल्येत्' इति एत्वे सकारस्य रुत्वे विसर्गे- एभिः इति रूपम् ।

चतुर्थ्येकवचने ङे-विभक्तौ - अत्वे, पररूपे, सर्वनामसंज्ञायां 'सर्वनाम्नः स्मै' इति 'स्मै'-आदेशे 'इद + स्मै' इति स्थिते 'हलि लोपः' इति इद्भागस्य लोपे- 'अस्मै' इति । द्विवचने - आभ्याम् । बहुवचने - अत्वादौ, इद्भागस्य लोपे एत्वे, रुत्वे, विसर्गे - 'एभ्यः' इति । पञ्चम्येकवचने - अत्वादौ, इद्-भागस्य लोपे 'अ+अस्' इति स्थिते सर्वनामसंज्ञकत्वात् 'ङसिङ्योः०-' इति सूत्रेण स्मात् आदेशे वर्णसम्मेलने 'अस्मात्' इति रूपम् । द्विवचने-आभ्याम् । बहुवचने - एभ्यः । षष्ठ्येकवचने - अत्वादौ, इद् - भागस्य लोपे 'अ +

अस्' इति स्थिते - टाङसि-ङसामि०-' इति सूत्रेण 'स्या'देशे अस्य इति रूपम् । द्विवचने ओसि - अत्वे, पररूपे 'इद+ ओस्' इत्यत्र 'अनाप्यकः' इति अनादेशे 'ओसि च' इति एत्वे 'अने + ओस्' इति जाते अयादेशे, सकारस्य रुत्वे विसर्गे - अनयोः इति रूपम् । बहुवचने-अत्वादौ 'इद + आम्' इत्यत्र सर्वनामसंज्ञायाम् - 'आमिसर्वनाम्नः सुट्' इति सूत्रेण सुटि, इद्-भागस्य लोपे 'अ + साम्' इति जाते 'बहुवचने०-' इति एत्वे 'आदेशप्रत्यययोः' इति षत्वे एषाम् इति रूपम् । सप्तम्येकवचने - अत्वादौ 'इद + इ' इति स्थिते, सर्वनामसंज्ञायां 'ङसि-ङ्योः-' इति स्मिन्-आदेशे इद्-भागस्य लोपे-'अस्मिन्' इति रूपम् । द्विवचने-अनयोः । बहुवचने-अत्वादौ, इद्-भागस्य लोपे, एत्वे, षत्वे-एषु इति रूपम् ।)

## अभ्यासः

१. **आप्-प्रत्याहारः** - टा, भ्याम्, भिस्, ङे, भ्याम्, भ्यस, ङसि भ्याम् भ्यस् ङस्, ओस्, आम्, ङि, ओस्, सुप् इति । हलादिः आप् - भ्याम्, भिस्, स्मै (ङे इत्यस्य स्मै-आदेशे) भ्याम्, भ्यस् भ्याम्, भ्यस्, स्मात् (ङसि इत्यस्य स्मात् - आदेशे) साम् (आम्-इत्यस्य सुडागमे) स्मिन् (ङि-इत्यस्य स्मिन्-आदेशे) सुप् - इति ।

२. **रूपसिद्धिप्रकार** :

**कस्मै** - किम् - शब्दात् चतुर्थ्येकवचने 'ङे' विभक्तौ अनुबन्धलोपे 'किमः कः' इति सूत्रेण किम् शब्दस्य कादेशे 'क + ए' इति स्थिते सर्वनामसंज्ञायां 'सर्वनाम्नः स्मै' इति स्मै-आदेशे, 'कस्मै' इति रूपं सिद्धम् ।

**कस्मिन्** - किम्-शब्दात् सप्तम्येकवचने 'ङि' विभक्तौ अनुबन्धलोपे 'किमःकः' इति कादेशे 'क + इ' इति स्थिते सर्वनामसंज्ञायां 'ङसिङ्योः०-' इति स्मिन्-आदेशे 'कस्मिन्' इति सिद्धम् ।

**अनेन** - इदम्-शब्दात् तृतीयैकवचने 'टा'-विभक्तौ अनुबन्धलोपे 'त्यदादीनाम:' इति मकारस्य अत्वे 'अतो गुणे' इति पररूपे 'इद + आ' इति स्थिते' दश्च' इति सूत्रेण मत्वे प्राप्ते तत् प्रबाध्य 'अनाप्यक:' इति 'इद्'- भागस्य 'अन्' इत्यादेशे 'अन + आ' इति जाते, 'टाङसिङसामि०' इति सूत्रेण इनादेशे गुणे 'अनेन' इति निष्पन्नम् ।

**एषाम्** - इदम् - शब्दात् षष्ठी-बहुवचने आमि अत्वे, पररूपे 'इद + आम्' इति स्थिते सर्वनामसंज्ञायाम् 'आमि सर्वनाम्न: सुट्' 'इति सूत्रेण सुटि, अनुबन्धलोपे 'इद+साम्' इति जाते 'हलि लोप:' इति इद्-भागस्य लोपे 'अ+साम्' इति स्थिते 'बहुवचने-' इति एत्वे' आदेशप्रत्यययो:' इति षत्वे एषाम् इति सिद्धम् ।

## अभ्यासार्थ प्रश्ना:

**१. अधो लिखितानां प्रश्नानाम् उत्तराणि दत्त -**

(क) 'किम: क:' इति किं शब्दस्य क-आदेश: कुत्र भवति ?

(ख) 'अतो गुणे' इति सूत्रं किं करोति ?

(ग) 'अनाप्यक:' इति सूत्रेण अन्-आदेश: कुत्र भवति ?

(घ) 'हलि लोप:' इत्यनेन सूत्रेण कस्य लोप: ?

(ङ) इदम्-शब्दस्य सप्तम्येकवचने किं रूपम् ?

**२. अधो लिखितानां सूत्राणामर्थं लिखत -**

इदोऽय् पुंसि, अनाप्यक:, हलि लोप: ।

**३. अधो लिखितान् प्रयोगान् साधयत -**

कानि, केषाम्, इमे, इमान्, अस्मिन् ।

४. **रिक्तस्थानं पूरयत -**

(क) 'इदोऽय् पुंसि' इति इदम ................ अयादेश: (इद्-भागस्य, मस्य)

(ख) 'त्यदादीनाम:' इति त्यदादिगणपठितस्य ......... आदेश: (मकार:, अकार:)

(ग) 'दश्च' इति 'इदम्' इत्यस्य ........... भवति (दस्य मकार:, मस्य दकार:)

(घ) 'हलि लोप:' इति 'इद् भागस्य .................. लोप: (आपि परे, हलादौ)

(ङ) इदम् शब्दात् प्रथमाया बहुवचने ........................... विभक्तौ अत्वे पररूपे .................... इति सूत्रेण दकारस्य ................ सर्वनामस्थान-संज्ञायाम् ................... इति आदेशे ................ इम+ई इति स्थिते ....................... इति रूपम् सिद्धम्।

५. **शुद्धेषु (√) अशुद्धेषु च (x) चिह्नं कुरुत -**

(क) किम्-शब्दस्य जसि 'का:' इति रूपम् भवति ( )

(ख) 'अनेन' इत्यत्र 'टाङसिङसाम्-' इति इनादेशो भवति ( )

(ग) 'केषाम्' इत्यत्र सुडागमो भवति ( )

(घ) 'अनयो:' इत्यत्र गुणो भवति ( )

(ङ) 'कौ' इत्यत्र वृद्धि: भवति ( )

६. **अधो लिखितेषु पदेषु द्वौ द्वौ सम्मेल्य वाक्यं कुरुत -**

यथा - अयं बालक:

| |
|---|
| बालक:, कौ, अस्य, कस्य, अयम्, पुस्तकम्, कन्दुकम्, अस्मिन्, छात्रौ, विद्यालये, गृहे, कस्मिन् |

(क) ..................................................

(ख) ..................................................

(ग) ..................................................

(घ) ..............................................

(ङ) ..............................................

७. किम्-इदम् शब्दयोः तृतीया-चतुर्थ्योः रूपाणि लिखत ।

## विशेष अभ्यास

१. 'किम्'-शब्द सर्वनाम हो । विशेषणका रूपमा यसको प्रयोग गरिन्छ । अतः विशेष्य अनुसार यसमा भिन्नाभिन्नै लिङ्ग, विभक्ति र वचनहरूको प्रयोग गर्नु पर्दछ । प्रश्नवाचकको रूपमा नै यसको प्रयोग हुन्छ । जस्तै - कः बालकः (को केटो हो) कम् पुरुषम् (कुन पुरुषलाई) कस्मात् वृक्षात् (कुन रूखबाट) कस्मिन् गृहे (कुन घरमा) आदि ।

२. 'इदम्'-शब्द पनि सर्वनाम हो र विशेषणका रूपमा नै प्रयोग गरिन्छ, तर प्रश्न र उत्तर दुवै प्रकारका वाक्यहरूमा यसको उपयोग हुन्छ । जस्तै - अयं कः ? (यो को हो) अयं शेखरः (यो शेखर हो)

३. 'किम्' - शब्द प्रश्नका रूपमा प्रयोग गरिन्छ भने 'इदम्'-शब्द समीपमा रहेका वस्तु अथवा व्यक्तिलाई देखाएर प्रयोग गरिन्छ । जस्तै- अयं कस्य बालकः ? (यो कसको छोरो हो ?) अस्य गृहं कुत्र यसको घर कहाँ छ आदि ।

चतुर्विंशः पाठः

# हलन्तपुंलिङ्गप्रकरणम्

राजन्-इति नकारान्तः पुँल्लिङ्गः शब्दः, तस्मात् प्रथमाया एकवचने सु-विभक्तौ 'राजन्+स्' इति स्थिते 'अलोऽन्त्यात्पूर्व उपधा' इति उपधासंज्ञायां 'सर्वनामस्थाने चासम्बुद्धौ' इति उपधाया दीर्घे' हल्ङ्याब्भ्यः०-' इति सु-लोपे 'न लोपः-' इति नकारलोपे- 'राजा' इति । द्विवचने-'राजन् + औ' इत्यत्र उपधासंज्ञायां सर्वनामस्थान-संज्ञायां च- 'सर्वनामस्थाने०' इति उपधादीर्घे वर्णसम्मेलने-राजानौ इति । बहुवचने-'राजन् + अस्' इत्यत्र पूर्ववद् उपधादीर्घे सकारस्य रुत्वे विसर्गे - राजानः इति भवति । सम्बोधने - प्रथमाया एकवचने सु-विभक्तौ -

(नलोपविधिसूत्रम्)

सूत्र-१४१ न ङिसम्बुद्ध्योः ८ । २ । ८

**नस्य लोपो न ङौ सम्बुद्धौ च।** हे राजन् ।

(प्रातिपदसंज्ञकस्य पदस्य अन्त्ये विद्यमानस्य नस्य लोपो न भवति, ङि-विभक्तौ, सम्बुद्धिसंज्ञके सु-प्रत्यये च परे । यथा-'हे राजन्+स्' इत्यत्र सम्बुद्धिसंज्ञायां सलोपे 'नलोपः-' इति प्राप्ते अनेन निषेधे - 'हे राजन्' इति द्विवचन - बहुवचनयोः- हे राजानौ, हे राजानः इति भवतः । द्वितीयैकवचने-राजानम्, द्विवचने-राजानौ इति । बहुवचने तु- 'राजन्–अस्' इत्यत्र 'अल्लोपोऽनः' इति सूत्रेण 'अन्' इत्यस्य अकारस्य लोपे 'राज्न् + अस्' इति जाते 'स्तोः श्चुनाश्चु' इति नकारस्य श्चुत्वे ञकारे 'जञोर्ज्ञः' इति नियमेन ज्-ञसंयोगे 'ज्ञ्' इति, ततः वर्णसम्मेलने सकारस्य रुत्वे विसर्गे - राज्ञः इति रूपम् । एवम्-टा-ङे-ङसि-ङस्' इत्यादिषु अजादिविभक्तिषु 'अल्लोपोऽनः' इति अकारलोपे नकारस्य श्चुत्वे ज्-ञ्संयोगे - राज्ञा, राज्ञे इत्यादीनि रूपाणि सिद्ध्यन्ति । सप्तम्येकवचने तु-'विभाषा ङिश्योः' इति वैकल्पिके अकारलोपे-

राज्ञि-राजनि इति रूपद्वयम् । हलादौ (भ्याम्, भिस्, भ्यस्-इत्यादौ) विभक्तौ 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां' न लोप:०' इति सूत्रेण नकारलोपे-राजभ्याम्, राजभि: इति भवति ।)

तद्-इति दकारान्त: त्यदादिगणपठित: शब्द: । तस्य प्रथमाया एकवचने सुविभक्तौ 'त्यदादीनाम:' इति अत्वे 'अतो गुणे' इति पररूपे -'त + स्' इति स्थिते-

(सत्वविधिसूत्रम्)

६।२ १।१ १।१ ६।२
सूत्र-१४२ **तदो: स: सावनन्त्ययो: ७ । २ । १०६**

**त्यदादीनां तकारदकारयो: अनन्त्ययो: स:स्यात् सौ ।** स:, तौ, ते । य:, यौ, ये । एष: एतौ एते ।

(त्यदादिगणपठितानां शब्दानाम् अन्त्यभिन्नयो: तकारदकारयो: स्थाने स आदेशो भवति सु-विभक्तौ परे । यथा- 'तद्+स्' इत्यत्र अनेन सूत्रेण तकारस्य स्थाने 'स्' इत्यादेशे 'स+स्' इति जाते पदान्तसकारस्य रुत्वे विसर्गे-स: इति रूपम् । द्विवचने-'तद् + औ' इत्यत्र अत्वे, पररूपे वृद्धौ-तौ इति । बहुवचने-'तद् + अस्' इत्यत्र सर्वनामसंज्ञायाम्, अत्वे, पररूपे 'जस:शी' इति 'शी'-इत्यादेशे ' त+ई' इति जाते गुणे ते इति रूपम् । एवम् - द्वितीयादौ अत्वे, पररूपे च कृते सर्वशब्दवद् रूपाणि भवन्ति । यद्-एतद्-शब्दयोरपि तद्-शब्दवद् रूपाणि सिद्धयन्ति ।)

महत्-शब्द उणादिनिष्पन्न:, तत्र शतृ-प्रत्ययान्त इव कार्यं स्याद् इत्युक्तम् । अत एव उगित्वाद् नुमागम: -

(नुम्विधिसूत्रम्)

सूत्र-१४३ उगिदचां सर्वनामस्थानेऽधातोः ७ । १ । ७०

**अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्, सर्वनामस्थाने परे ।** (यो धातुभिन्न उगित् तस्य, यस्य नलोपो भवति स अञ्चधातुः तस्य च नुमागमो भवति, सर्वनामस्थाने प्रत्यये परे । यथा - 'महत्' - शब्दात् 'सु'-विभक्तौ - 'महत् + स्' इत्यत्र सर्वनामस्थानसंज्ञायाम् 'मिदचोऽन्त्यात्परः' इति सहकृतेन अनेन सूत्रेण नुमागमे 'महन्त् + स्' इति जाते 'हल्ङ्याब्भ्यः०' इति सलोपे 'संयोगान्तस्य०' इति तकारलोपे)

(दीर्घविधिसूत्रम्)

सूत्र-१४४ सान्तमहतः संयोगस्य ६ । ४ । १०

**सान्तसंयोगस्य महतश्च यो नकारः तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने परे ।**

(सकारान्तसंयोगस्य उपधाया, महत्-शब्दस्य यः नकारः तस्य च उपधाया दीर्घो भवति, सम्बुद्धिभिन्ने सर्वनामस्थानसंज्ञके प्रत्यये परे । यथा संयोगान्तलोपे 'महन्' इति जाते उपधासंज्ञायाम् अनेन सूत्रेण उपधादीर्घे - 'महान्' इति । प्रथमा - द्विवचने 'महत् + औ' इत्यत्र नुमागमे, उपधा दीर्घे- महान्तौ इति । प्रथमा-बहुवचने-'महत् + अस्' इत्यत्र नुमागमे उपधा दीर्घे, रुत्वे विसर्गे - महान्तः इति ।

सम्बोधने - एकवचने - उपधा दीर्घो न, अतः हे महन् इति । द्विवचन-बहुवचनयोः हे महान्तौ, हे महान्तः इति । तृतीयादौ-नुमागमः, उपधादीर्घादिर्न भवति । अतः- महता महद्भ्याम्, महद्भिः इत्यादीनि रूपाणि सिद्धयन्ति ।)

धीमत् - शब्दः अतु-प्रत्ययान्तः । 'अतु' इत्यनेन मतुप्, वतुप्,डवतु - प्रत्ययानां ग्रहणं भवति । धीमत् - शब्दात् प्रथमाया एकवचने सु-विभक्तौ - 'धीमत् + स्' इत्यत्र सर्वनामस्थानसंज्ञायाम् 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्, सलोपः संयोगान्तलोपश्च ततः-

(दीर्घविधिसूत्रम्)

सूत्र-१४५ अत्वसन्तस्य चाधातोः ६ । ४ । १४

**अत्वन्तस्योपधाया दीर्घो धातुभिन्नाऽसन्तस्य चासम्बुद्धौ सौ परे ।**

(अतु-प्रत्ययान्तस्य उपधाया, धातुभिन्नस्य असन्तस्य च उपधाया दीर्घो भवति, सम्बुद्धिभिन्ने सु-प्रत्यये परे । यथा - 'धीमन्' इति जाते उपधा-संज्ञायाम् अनेन सूत्रेण उपधाया दीर्घे - धीमान् इति रूपम् भवति ।

प्रथमाया - द्विवचने - 'धीमत् + औ' इत्यत्र सर्वनामस्थानसंज्ञायाम् 'उगिदचाम्०-' इति नुमि - धीमन्तौ इति । बहुवचने - धीमन्तः इति । सम्बोधने- एकवचने - सुलोपे, संयोगान्तलोपे, उपधादीर्घाभावात् - 'हे धीमन्' इति । द्विवचन-बहुवचनयोः - हे धीमन्तौ, हे धीमन्तः इति द्वितीयाया एकवचने - धीमन्तम्, द्विवचने - धीमन्तौ । बहुवचने तु - 'धीमत् + अस्' इत्यत्र सर्वनामस्थानाभावात् नुमागमो न, तत्र वर्णसम्मेलने सकारस्य रुत्वे, विसर्गे - धीमतः इति । तृतीयादौ महत्शब्दवद् बोध्यम् ।)

## अभ्यासः

१. **तद् - शब्दवत् यद् - एतद् - शब्दयो** : अपि रूपाणि सिद्ध्यन्ति । यद् - शब्दस्य सु-विभक्तौ अन्त्यभिन्नयोः तकार-दकारयो : अभावात् 'तदोः सः-' इति सूत्रस्य प्रवृत्तिर्न भवति, एतद्-शब्दे तु तस्य प्रवृत्तिर्भवति । तत्र 'तदो सः-' इति विहित स्य सकारस्य 'आदेशप्रत्यययोः' इति षत्वम् । यथा - 'यद् + स्' इत्यत्र- अत्वे,

पररूपे, सकारस्य रुत्वे, विसर्गे-यः इति । 'एतद् + स्' इत्यत्र-अत्वादौ' इति सत्वे, षत्वे, सस्य रुत्वे विसर्गे-एषः इति ।

२. **यद्शब्दस्य (पुँल्लिङ्गे) प्रथमा - द्वितीययोः रूपाणि -**

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाः | यः | यौ | ये |
| द्वितीयायाः | यम् | यौ | यान् |

एतद् - शब्दस्य सर्वासु विभक्तिषु रूपाणि

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | एषः | एतौ | एते |
| द्वितीया | एतम् | एतौ | एताम् |
| तृतीया | एतेन | एताभ्याम् | एतैः |
| चतुर्थी | एतस्मै | एताभ्याम् | एतेभ्यः |
| पञ्चमी | एतस्मात्-द् | एताभ्याम् | एतेभ्यः |
| षष्ठी | एतस्य | एतयोः | एतेषाम् |
| सप्तमी | एतस्मिन् | एतयोः | एतेषु |

**रूपसिद्धिप्रकार :**

'ते' इति-तद्शब्दात् प्रातिपदिकात् प्रथमाया बहुवचने 'जस्'- विभक्तौ अनुबन्धलोपे 'तद् + अस्' इति स्थिते सर्वनामसंज्ञायां 'त्यदादीनाम:' इति अत्वे 'अतो गुणे' इति पररूपे 'त + अस्' इति जाते 'जसः शी' इति शी आदेशेऽनुबन्धलोपे 'त + ई' इति स्थिते गुणे 'ते' इतिरूपं सिद्धम् ।

**महान्तः** - प्रातिपदिकसंज्ञकात् महत्शब्दात् प्रथमाया बहुवचने 'जसि' अनुबन्धलोपे 'महत् + अस्' इति स्थिते 'सुडनपुंसकस्य' इति सर्वनामस्थानसंज्ञायाम् 'उगिदचां सर्वनामस्थाने' इति नुमागमेऽनुबन्धलोपे उपधासंज्ञायां 'सान्तमहत: संयोगस्य' इति नान्तस्योपधाया दीर्घे वर्णसम्मेलने पदान्तसकारस्य रुत्वे विसर्गे 'महान्त:' इति निष्पन्नम् ।

**धीमान्** - प्रातिपदिकाद् धीमत्-शब्दात् प्रथमाया एकवचने सु-विभक्तौ अनुबन्धलोपे 'धीमत् + स्' इति स्थिते सर्वनामस्थानसंज्ञायाम् 'उगिदचाम्०-' इति नुमि अनुबन्धलोपे 'हल्ङ्याब्भ्य:०-' इति सलोपे संयोगान्तलोपे च कृते 'अत्वसन्तस्य चाधातो:' इति उपधादीर्घे 'धीमान्' इति रूपं सिद्धम् ।

## अभ्यासार्थ प्रश्ना:

**१. अधो लिखितानां प्रश्नानाम् उत्तराणि लिखत**

(क) राजन् - शब्दे उपधासंज्ञाया: प्रयोजनं किम् ?

(ख) 'न ङिसम्बुद्धयो:' इति सूत्रेण कुत्र कस्य निषेध: ?

(ग) 'तदो: स:-' इति सूत्रं किं करोति ?

(घ) 'राजन्-स्' इत्यत्र सलोप: केन सूत्रेण भवति ?

(ङ) 'उगिदचाम्-' इति कस्य नुमागम: ?

**२. एतान् प्रयोगान् साधयत**

राजा, राज्ञ:, तान्, महान्तौ, धीमत: ।

३. **रिक्तस्थानं पूरयत -**

(क) 'तदोः सः-' इति ............ तकार-दकारयोः सत्वम् (अन्त्ययोः, अनन्त्ययोः)

(ख) 'उगिदचाम्०-' इति नुमागमः ........................ भवति (अन्त्याचःपरे, अन्त्यालःपरे)

(ग) 'सान्तमहतः-' इति ........... दीर्घः (उपधायाः, नान्तस्य उपधायाः)

(घ) अत्वसन्तस्य-इति उपधादीर्घः ............ (सर्वनामस्थाने, सम्बुद्धिभिन्ने सौ)

(ङ) राजन्-शब्दात् जसि ................ इति स्थिते सर्वनामस्थानसंज्ञायां .......... ............. इति .............. दीर्घे ......................... इति सिद्धम्।

४. **विभक्तिं निर्दिशत -**

राज्ञे, राज्ञि, महतः, धीमता, धीमतोः।

५. **शुद्धम् उच्चारयत -**

तदोः सः सावनन्त्ययोः, उगिदचां सर्वनामस्थानेऽधातोः

६. **बुद्धिमत्-शब्दस्य सर्वासु विभक्तिषु रूपाणि लिखत।**

७. **शुद्धेषु (√) अशुद्धेषु च (x) चिह्नम् अङ्कयत -**

(क) न ङिसम्बुद्ध्योः इति नलोपो भवति ( )

(ख) 'उगिदचाम्०-' इति नुमागमो भवति ( )

(ग) धीमत् शब्दवत् भवत् शब्दोऽपि 'अतु'- प्रत्ययान्तः ( )

(घ) 'अत्वसन्तस्य - 'इति सर्वनामस्थाने परे दीर्घो भवति ( )

(ङ) 'राज्ञः' इत्यत्र 'अल्लोपोऽनः' इति अकारलोपो भवति ( )

## विशेष अभ्यास

१. धीमत् शब्दजस्तै 'भवत् र बुद्धिमत्' शब्दका रूपहरू बन्दछन् । 'भवत्' शब्दका सबै विभक्तिका रूप-तालिका -

| विभक्ति | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | भवान् | भवन्तौ | भवन्त: |
| द्वितीया | भवन्तम् | भवन्तौ | भवत: |
| तृतीया | भवता | भवद्भ्याम् | भवद्भि: |
| चतुर्थी | भवते | भवद्भ्याम् | भवद्भ्य: |
| पञ्चमी | भवत: | भवद्भ्याम् | भवद्भ्य: |
| षष्ठी | भवत: | भवतो: | भवताम् |
| सप्तमी | भवति | भवतो: | भवत्सु |
| सम्बोधन | हे भवन् | हे भवन्तौ | हे भवन्त: |

२. राजन् शब्दको स्त्रीलिङ्गमा राज्ञी, धीमत् शब्दको 'धीमती' र बुद्धिमत् शब्दको 'बुद्धिमती' हुन्छ । राज्ञी, धीमती र बुद्धिमती शब्दका रूपहरू नदी शब्दजस्तै हुन्छन् ।

पञ्चविंशः पाठः

# हलन्तस्त्रीलिङ्गप्रकरणम्

(हलन्तस्त्रीलिङ्गशब्दनिरूपणम्)

किम्-इति सर्वनामशब्दात् प्रथमाया एकवचने सु-विभक्तौ - 'किम् + स्' इति स्थिते 'किमः कः' इति सूत्रेण 'क' - आदेशे

(टाप् -प्रत्ययविधिसूत्रम्)

५।१ १।१

**सूत्र-१४६ अजाद्यतष्टाप् ४ । १ । ४**

**अजादीनाम् अकारान्तस्य च स्त्रीत्वे टाप् ।**

(अजादिगणपठितानाम् अकारान्तस्य च स्त्रीत्वे अर्थे टाप्-प्रत्ययो भवति । अजादिगणे-अजा, एडका, अश्वा-इत्यादिशब्दाः सन्ति । अत्र तु अकारान्तस्य उदाहरणम् यथा - किम्-शब्दस्य क-आदेशे 'क + स्+ इत्यत्र अनेन सूत्रेण टाप्, अत्र टकार-पकारौ इतौ भवतः । 'क + आ + स्' इत्यत्र सवर्णदीर्घे सकारस्य 'हल्ङ्याब्भ्यः-' इति लोपे - 'का' इति रूपम् ।

प्रथमाया द्विवचने-क-आदेशे 'क+औ' इत्यत्र टापि सवर्णदीर्घे 'का + औ' इति जाते-'औङ आपः इति 'शी, आदेशे, अनुबन्धलोपे 'का + ई' इति जाते गुणे - 'के' इति । बहुवचने - क-आदेशे, टापि, सवर्णदीर्घे 'का + अस्' इति जाते पुनः सवर्णदीर्घे सकारस्य रुत्वे विसर्गे - 'काः' इति ।

एवम्-द्वितीयादौ अपि-क आदेश-टाप् -सवर्णदीर्घादौ कृते - सर्वाशब्दवद् रूपाणि सिद्ध्यन्ति ।)

इदम्-शब्दस्यापि सर्वनामसंज्ञा भवति । तस्मात् प्रथमाया एकवचने सु-विभक्तौ- 'इदम् + स्' इति स्थिते 'त्यदादीनामः' इति अत्वे प्राप्ते - तत् प्रबाध्य 'इदमो मः' इति मत्वे -

११ ७१
सूत्र-१४७ **यः सौ** ७ । २ । ११०

**इदमो दस्य यः** । इयम् । त्यदाद्यत्वम्, पररूपत्वम् ।

(इदम्-शब्दस्य यः दकारः तस्य स्थाने यकार-आदेशो भवति, सौ परे स्त्रीलिङ्गे । यथा - 'इदम्-स्' इति स्थिते अत्वं प्रबाध्य 'इदमो मः' इति मकारस्य मकारे अनेन सूत्रेण दकारस्य यकारे - 'इयम्' इति रूपम् ।

प्रथमाया द्विवचने - 'इदम् + औ' इति स्थिते अत्वे, पररूपे, टापि, सवर्णदीर्घे 'दश्च' इति दकारस्य मत्वे 'इमा + औ' इति जाते 'औङ आपः' इति शी, 'इमा + ई' इति स्थिते गुणे - 'इमे' इति रूपम् । बहुवचने- अत्वे, पररूपे, टापि, सवर्णदीर्घे 'दश्च' इति मत्वे 'इमा + अस्' इति जाते सवर्णदीर्घे सस्य रुत्वे, विसर्गे - 'इमाः' इति । एवम् - द्वितीयैकवचने 'इमा + अम्' इत्यत्र पूर्वरूपे 'इमाम्' इति । द्विवचने 'इमे' । बहुवचने 'इमा+अस्' इति स्थिते पूर्वसवर्णदीर्घे सस्य रुत्वे, विसर्गे-इमाः इति । तृतीयैकवचने- अत्वे, पररूपे, टापि, सवर्णदीर्घे - 'इदा + आ' इति जाते 'अनाप्यकः' इति 'इद्'-भागस्य अन्-आदेशे 'अना+आ' इति स्थिते- 'आङि चापः' इति एत्वे, अयादेशे, वर्णसम्मेलने - 'अनया' इति रूपम् ।

भ्यामादौ हलादौ विभक्तौ ङिति स्याडागमे च- 'हलि लोपः' इति इद्-भागस्य लोपः । यथा-तृतीया-द्विचने-अत्वादौ 'इदा+ भ्याम्' इति जाते 'हलि लोपः' इति इद्-भागस्य लोपे-'आभ्याम्' इति रूपम् । चतुर्थ्येकवचने-ङेविभक्तौ-अत्वादौ 'इदा+ए' इति स्थिते 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याडागमे आप ह्रस्वे च कृते 'इद + स्या + ए' इति जाते इद् भागस्य लोपे वृद्धौ - 'अस्यै' इति रूपम् ।

तद्-इति सर्वनामसंज्ञकः शब्दः । तस्मात् प्रथमाया एकवचने सु-विभक्तौ-'तद् + स्' इति स्थिते अत्वे, पररूपे, टापि, सवर्णदीर्घे 'ता + स्'

इति जाते 'तदो: स:-' इति सत्वे 'हलङ्याब्भ्य: - 'इति सु-लोपे - 'सा' इति रूपम् । द्विवचने - अत्वादौ 'ता + औ' इति स्थिते 'औङ आप:' इति शी, 'ता + ई' इति जाते गुणे - 'ते' इति । एवम् -सर्वत्र अत्वादौ टापि, सवर्णदीर्घे कृते सति-सर्वाशब्दवत् सिद्धिप्रकार: ।

## अभ्यास:

१. **रूपसिद्धिप्रकार: -**

**'का'**-प्रातिपदिकात् 'किम्' शब्दात्-प्रथमाया एकवचने सु-विभक्तौ 'किम:क:' इति कादेशे स्त्रीत्व-विवक्षायाम्' अजाद्यतष्टाप्' इति टाप्-प्रत्ययेऽनुबन्धलोपे सवर्णदीर्घे 'का + स्' इति स्थिते 'हलङ्याब्भ्य:०' इति सलोपे 'का' इति रूपम् सिद्धम् ।

**'इयम्'**-इदम्-शब्दात् प्रातिपदिकात् प्रथमाया एकवचने सु-विभक्तौ 'इदम् + स्' इति स्थिते 'त्यदादीनाम:' इति अत्वे प्राप्ते तत् प्रबाध्य 'इदमो म: इति मकारस्य मकारे एव आदेशे 'य: सौ' इति दस्य यत्वे 'हल्ङ्या-ब्भ्य:-' इति सकारलोपे 'इयम्' इति सिद्धम् ।

**इमे**-प्रातिपदिकात् इदम्-शब्दात् प्रथमा-द्विवचने औ-विभक्तौ 'इदम्+औ' इति स्थिते 'त्यदादीनाम: इति अत्वे पररूपे स्त्रीत्वेऽर्थे 'अजाद्यतष्टाप्' इति टापि अनुबन्धलोपे सवर्णदीर्घे 'दश्च' इति दकारस्य मकारे 'इमा + औ' इति जाते 'औङ आप:' इति शी-आदेशेऽनुबन्धलोपे 'इमा + ई' इति स्थिते गुणे 'इमे' इति रूपं सिद्धम् ।

## २. किम्-इदम् शब्दयोः सर्वासु विभक्तिषु रूपाणि -

(क) किम्-शब्दस्य रूप-तालिका - (स्त्रीलिङ्गे)

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | का | के | काः |
| द्वितीया | काम् | के | काः |
| तृतीया | कया | काभ्याम् | काभिः |
| चतुर्थी | कस्यै | काभ्याम् | काभ्यः |
| पञ्चमी | कस्याः | काभ्याम् | काभ्यः |
| षष्ठी | कस्याः | कयोः | कासाम् |
| सप्तमी | कस्याम् | कयोः | कासु |

(ख) इदम्-शब्दस्य रूप-तालिका - (स्त्रीलिङ्गे)

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | इयम् | इमे | इमाः |
| द्वितीया | इमाम् | इमे | इमाः |
| तृतीया | अनया | आभ्याम् | आभिः |
| चतुर्थी | अस्यै | आभ्याम् | आभ्यः |
| पञ्चमी | अस्याः | आभ्याम् | आभ्यः |
| षष्ठी | अस्याः | अनयोः | आसाम् |
| सप्तमी | अस्याम् | अनयोः | आसु |

## ३. तद्-शब्दस्य प्रथमा-द्वितीययोः रूपाणि - (स्त्रीलिङ्गे)

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सा | ते | ताः |
| द्वितीया | ताम् | ते | ताः |

अन्यानि रूपाणि किम् शब्दवत् भवन्ति । एवं यद्, एतद् शब्दयोः अपि रूपाणि भवन्ति ।

## अभ्यासार्थ प्रश्नाः

१. अधो लिखितानां प्रश्नानाम् उत्तराणि दत्त -

(क) 'टाप्' - इत्यत्र कस्य-कस्य अनुबन्धलोपः ?

(ख) 'यः सौ' इति कस्मिन् प्रत्यये परे यत्वं भवति ?

(ग) किम्-शब्दस्य स्त्रीलिङ्गे औ-इत्यस्य शी-आदेशः केन सूत्रेण ?

(घ) 'इदम्'-शब्दात् टा-विभक्तौ 'इदा + आ' इत्यत्र किं भवति ?

(ङ) 'त्यदादीनामः' इति कस्य अकार आदेशः ?

२. अधो लिखितान् प्रयोगान् साधयत. -

काः, इमाः, अनया ।

३. 'यः सौ' इति सूत्रस्यार्थ लिखत ।

४. रिक्तस्थानं पूरयत

(क) 'इमाम्' इत्यत्र 'इमा + अम्' इति स्थिते ....... (पूर्वसवर्णदीर्घः, पूर्वरूपम्)

(ख) स्त्रीलिङ्गे तद्-शब्दस्य द्वितीया बहुवचने .......... रूपम् (ताः, तान्, तानि)

(ग) स्त्रीलिङ्गे तद्-शब्दस्य प्रथमैकवचने ............ रूपम् (इदम्, एषा, इयम्)

(घ) तद्-शब्दात् जसि 'ता+अस्' इति स्थिते ......... (सवर्णदीर्घः, पूर्वसवर्णदीर्घः)

(ङ) स्त्रीलिङ्गे इदम्-शब्दस्य ङसि .............. रूपम् (अस्य, एतस्याः, अस्याः)

५. अ-आ समूहयोः द्वौ-द्वौ शब्दौ मेलयित्वा वाक्यं रचयत -

| अ-समूहः | आ-समूहः | |
|---|---|---|
| (क) - सा | (क) - गृहम् | यथा -कस्याः पुत्री |
| (ख) - ताः | (ख) - बालिका | ........................ |
| (ग) - इमे | (ग) - लताः | ........................ |
| (घ) - अस्याः | (घ) - भगिन्यौ | ........................ |
| (ङ) - कस्याः | (ङ) - रमा | ........................ |
| (च) - एषा | (च) - पुत्री | ........................ |

६. यद्-शब्दस्य सर्वासु विभक्तिषु रूपाणि लिखत ।

## विशेष अभ्यास

| १. किम्, इदम्, तद्, यद् र एतद् जस्ता सर्वनाम शब्दहरूको यसप्रकार प्रयोग गरिन्छ। | |
|---|---|
| पुंलिङ्गमा | स्त्रीलिङ्गमा |
| कः सुन्दरः = को सुन्दर (पुरुष) (हो) | का सुन्दरी = को सुन्दरी (स्त्री) (हो) |
| अयम् श्रीधरः = यो श्रीधर (हो) | इयम् रमा = यो रमा (हो) |
| स बालकः = त्यो बालक (हो) | सा बालिका = त्यो बालिका (हो) |
| एष छात्रः = यो छात्र (हो) | एषा छात्रा = यो छात्रा (हो) |
| यः पठति सः = जो पढ्छ, त्यो (पुरुष) | या पठति सा = जो पढ्छे, त्यो (स्त्री) |
| २-संज्ञावाचक शब्दसँग प्रयोग गर्दा संज्ञाको सट्टामा यसरी प्रयोग गरिन्छ । | |
| कः पठति = को पढ्छ | का पठति = को पढ्छे |
| एष लिखति = यो लेख्छ | एषा लिखति = यो लेख्छे |
| इमे लिखन्ति = यिनीहरू लेख्छन् | इमाः लिखन्ति = यिनीहरू लेख्छन् |
| स पठति = त्यो पढ्छ | सा पठति = त्यो पढ्छे |
| तौ पठतः = तिनीहरू (दुई) पढ्छन् | ते पठतः = तिनीहरू (दुई) पढ्छन् |

# षड्विंशः पाठः हलन्तनपुंसकलिङ्गप्रकरणम्

(हलन्तनपुंसकलिङ्गशब्दनिरूपणम्)

किम् -शब्दस्य प्रथमाया एकवचने सु-विभक्तौ - 'किम् + स्' इति स्थिते 'स्वमोर्न-पुंसकात्' इति सोर्लुकि - 'किम्' इति भवति । द्विवचने - 'किम् + औ' इत्यत्र 'किमः कः' इति 'क' आदेशे 'क + औ' इति जाते 'नपुंसकाच्च' इति शी, 'क + ई' इति स्थिते गुणे 'के' इति रूपम् । बहुवचने - 'किम्' इत्यादेशे 'शि सर्वनामस्थानम्' इति सर्वनामस्थान संज्ञायां 'नपुंकस्य झलचः इति नुम् 'क न् + इ' इति जाते 'सर्वनामस्थाने चासम्बुद्धौ' इति उपधादीर्घे - वर्णसम्मेलने - कानि इति रूपम् । एवम्-द्वितीयायाम् अपि किम्, के , कानि-इति रूपाणि भवन्ति ।। तृतीयादौ-पुंलिङ्गवद् रूपाणि भवन्ति ।

इदम्-शब्दस्य प्रथमाया एकवचने सु-प्रत्ययस्य सकारस्य 'स्वमोर्न पुंसकात्' इति लुकि - 'इदम्' इति । द्विवचने - 'त्यदादीनामः' इति अत्वे 'अतो गुणे' इति पररूपे 'इद+औ' इति स्थिते 'नपुंसकाच्च' इति शी, 'इद + ई' इति जाते गुणे 'दश्च' इति दकारस्य मकारे - 'इमे' इति । बहुवचने -अत्वे, पररूपे 'इद +अस्' इति स्थिते 'जश्शसोः-' इति शि-आदेशे, 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य-' इति नुमि 'इदन् + अस्' इति जाते 'सर्वनामस्थाने-' इति दीर्घे 'दश्च' इति दकारस्य मकारे - 'इमानि' इति रूपं भवति । एवम् - द्वितीयायाम् अपि इदम्, इमे, इमानि इति रूपाणि । तृतीयादौ पुंवत् ।

तद्-शब्दस्य प्रथमाया एकवचने - सोर्लुकि, दकारस्य वैकल्पिके चर्त्वे-'तत्' इति । द्विवचने - अत्वे, पररूपे, 'नपुंसकाच्च' इति शी, 'त + ई' इति स्थिते गुणे-'ते' इति । बहुवचने-अत्वे, पररूपे 'जश्शसोः शि' इति 'शि' तस्य सर्वनामस्थानसंज्ञायां 'नपुंसकस्य-' इति नुमि, उपधादीर्घे वर्णसम्मेलने-तानि इति । एवम्-द्वितीयायामपि-तत्, ते, तानि-इति रूपाणि । तृतीयादौ तु - पुंवत् ।

यद्-एतद्-शब्दयोरपि रूपाणि तद्-शब्दवत् सिद्ध्यन्ति ।

## अभ्यासः

१. **पूर्वपठितानां सूत्राणाम् आवृत्ति :-**

| सूत्रम् | | कार्यम् |
|---|---|---|
| (क) स्वमोर्नपुंसकात् | - | सु-अम्-प्रत्यययोः लुक् |
| (ख) किमः कः | - | किम्-शब्दस्य क-आदेशः |
| (ग) नपुंसकाच्च | - | 'औ' इत्यस्य 'शी' - आदेशः |
| (घ) जश्शसोःशि | - | जस् - शस्-प्रत्यययोः शि-आदेशः |
| (ङ) शि सर्वनामस्थानम् | - | 'शि' इत्यस्य सर्वनामस्थानसंज्ञा |

२. **नपुंसकलिङ्गे तृतीयादौ विभक्तौ-किम्-शब्दस्य 'क' आदेशे, तद्-यद्-एतद् शब्दानां हलन्तानामपि अत्वे पररूपे पुँलिङ्ग-सर्वशब्दवद् रूपाणि भवन्ति । यथा -**

| | | | | | |
|---|---|---|---|---|---|
| सर्वेण | सर्वाभ्याम् | सर्वैः | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः |
| केन | काभ्याम् | कैः | कस्मै | काभ्याम् | केभ्यः |
| तेन | ताभ्याम् | तैः | तस्मै | ताभ्याम् | तेभ्यः |
| एतेन | एताभ्याम् | एतैः | एतस्मै | एताभ्याम् | एतेभ्यः |

इदम्-शब्दस्य तृतीया-बहुवचने भिस ऐस् न भवति । यथा-

| | | | | | |
|---|---|---|---|---|---|
| अनेन | आभ्याम् | एभिः | अस्मै | आभ्याम् | एभ्यः । |

३. **रूपसिद्धिप्रकार : -**

'के'-प्रातिपदिकात् किम्-शब्दात् प्रथमा-द्वितीययोः द्वि-वचनयोः 'किमःकः' इति क-आदेशे 'क + औ' इति स्थिते 'नपुंसकाच्च' इति शी-आदेशे अनुबन्धलोपे 'क+ई' इति जाते गुणे-'के' इति ।

'इमानि'-इदम्-शब्दात् प्रातिपदिकात् प्रथमा-द्वितीययोः बहुवचनयोः 'त्यदादीनामः' इति अत्वे 'अतो गुणे' इति पररूपे 'इद + अस्' इति स्थिते 'जश्शसोः शि' इति शि-आदेशेऽनुबन्धलोपे तस्य 'शि सर्वनाामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'इति जाते 'सर्वनामस्थाने-' इति उपधादीर्घे 'दश्च' इति दकारस्य मकारे वर्णसम्मेलने-'इमानि' इति ।

## अभ्यासार्थ प्रश्नाः

**१. अधो लिखितानां शब्दानां पुंनपुंसकयोः प्रथमा - द्वितीययो : भेदं दर्शयत-**
किम्, इदम्, तद्, एतद् ।

**२. अधो लिखितेषु पदेषु कः शब्दः, का च विभक्तिः इति पृथक् कुरुत -**
इमे, अनेन, तानि, एतैः, ये, एतयोः, अस्मिन् ।

**३. रिक्तस्थानं पूरयत -**

(क) 'एत + औ' इत्यत्र ............इति सूत्रम् (शि सर्वनामस्थानम्, नपुंसकाच्च)
(ख) 'इदम्' इत्यत्र ............... इति सुपो लुक् (हल्ङ्याब्भ्य०, स्वमोर्नपुंका०)
(ग) 'इमानि' इत्यत्र .......................... भवति (पूर्वसवर्णदीर्घः, उपधादीर्घः)
(घ) 'इदम्' शब्दस्य तृतीया-बहुवचने ....................... ऐस् (भवति, नभवति)
(ङ) 'इदम्' शब्दात् चतुर्थ्येकवचने 'इद + ए' इति स्थिते ..................... इति सूत्रेण 'इद्' भागस्य ...................... सर्वनामसंज्ञायाम् ...................... इति सूत्रेण .................. आदेशे .................. इति रूपम् सिद्धम् ।

४. उभयोः समूहयोः शब्दौ मेलयित्वा वाक्यं कुरुत -

| अ-समूहः | आ-समूहः | |
|---|---|---|
| किम् | इदम् | यथा - किम् इदम् |
| इदम् | पुस्तकानि | ........................ |
| ते | पुस्तकम् | ........................ |
| इमानि | पत्रम् | ........................ |
| एतत् | फले | ........................ |
| इमे | गृहम् | ........................ |

५. सर्वनामस्थानसंज्ञासूत्रे विलिख्य तयोः अर्थं लिखत ।

६. शुद्धवाक्येषु शुद्धिसूचकम् (√) अशुद्धेषु अशुद्धिसूचकम् च (X) चिह्नम् अङ्कयत-

(क) 'इमानि' इत्यत्र 'नपुंसकाच्च' इति 'शी' भवति ( )

(ख) जस्-प्रत्ययस्य सर्वनामस्थानसंज्ञा भवति ( )

(ग) 'आभ्याम्' इत्यत्र 'हलिलोपः' इति न प्रवर्तते ( )

(घ) 'एतयोः' इत्यत्र 'ओसि च' इति प्रवर्तते ( )

(ङ) 'स्वमोर्नपुंसकात्' इति सु-इत्यस्य 'अम्' भवति ( )

७. तद्-एतद्-शब्दयोः नपुंसके सर्वासु विभक्तिषु रूपाणि लिखत ।

## विशेष अभ्यास

किम् - इदम् - आदि शब्दहरूलाई वाक्यमा प्रयोग गरौँ । जस्तै -

किम् इदम् = यो के (हो) ?
इदम् पुस्तकम् = यो पुस्तक (हो)
के इमे = यी (दुई) के (हुन्) ?
इमे मन्दिरे = यी (दुई) मन्दिर (हुन्)
तद् गृहं कस्य = त्यो घर कसको (हो) ?
तद् गृहं श्रीधरस्य = त्यो घर श्रीधरको (हो)

तद् वनम् = त्यो वन (हो)
तानि नगराणि = ती नगरहरू (हुन्)
एतद् उद्यानम् = यो बगैँचा (हो)
एते फले = यी (दुई) फलहरू हन्
एतानि पुष्पाणि = यी (सबै) फूलहरू हुन्

